'पर्यूषु प्रधन्व वाजसातये (१) परि वृत्राणि सक्षणिः (२) ।
द्विषस्तरध्या ऋणया न ईयसे (३) ॥' (ऋग्वेदे—अ० ७ अ० ५ व० २२ म० १)

अन्तपक्ष उदाहरणम्—

'मा कस्मै धातमभ्यमित्रिणे नो (१) माकुत्रा नो गृहेभ्यो धेनवो गुः (२) ।
स्तनाभुजो अशिश्वीः (३) ॥' (ऋग्वेदे—अ० १ अ० ८ व० २३ म० ८)

इत्यनुष्टुबधिकारः ।

## बृहती जागतस्त्रयश्च गायत्राः । ३ । २६ ॥

एको जागतः पादः, त्रयश्च गायत्राः, तदा 'बृहती' नाम छन्दो भवति ॥

यथा—

'मत्स्वा सुशिप्र हरिवस्तदीमहे (१) त्वे आ भूषन्ति वेधसः (२) ।
तव श्रवांस्युपमान्युक्थ्या (३) सुतेष्विन्द्र गिर्वणः (४) ॥'
(ऋग्वेदे अ० ६ अ० ७ व० ३ म० २)

## पथ्या पूर्वश्चेत्तृतीयः । ३ । २७ ॥

'बृहती' इत्यनुवर्तते । पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये गायत्राः, तदासौ बृहती 'पथ्या' नाम छन्दो भवति । यथा—

'मा चिदन्यद्वि शंसत (१) सखायो मा रिषण्यत (२) ।
इन्द्रमित्स्तोता वृषणं सचा सुते (३) मुहुरुक्था च शंसत (४) ॥'
(ऋग्वेदे—अ० ५ अ० ७ व० १० म० १)

## न्यङ्कुसारिणी द्वितीयः । ३ । २८ ॥

---

१–२ प्रथनुष भविया' इत्युषिमृषन्देन पादपूर्तिः ३ ४ अभिम अश्रुवी' इति पादपूर्तिः सायणभाष्ये कृतिरस्य नाम । ५ सर्वानुक्रमणिकायां यथा—'तृतीयमनुष्टुप्, चत्वारोऽष्टकाः (१) पञ्च पञ्चकाः पट्कश्चैको म...पथ्यपङ्क्तिः (२) जागतावष्टकश्च कृतिः (३) मध्ये चेदष्टकः पिपीलिकामध्या (४) नवकयोर्मध्ये जागतः काविराट् (५) नववैराजत्रयोदशैर्न...रूपी (६) दशकास्त्रयो विराट् (७) एकादशकौ वा (८)' इत्यथानुष्टुभः । ...महुर्येमनायनुष्टुप्' इति ब्राह्मणे निरुक्तिः ६ इतोऽग्रे वैदिकान्युदाहरणानि कस्मिंश्चितामुद्रिते पुस्तके न वर्तन्ते तान्यन्विष्य लिख्यन्ते । ७ पूर्वसूत्रपठितः । प्रथम...त्सर्वः ।

'पूर्वश्चेद्' इत्यनुवर्तते । पूर्वश्चेज्जागत पादो द्वितीयो भवति, शेषाश्च गायत्राः, तदा 'न्यङ्कुसारिणी' नाम्नी बृहती भवति । यथा—

'मत्स्यपायि ते महः (१) पात्रस्येव हरिवो मत्सरो मदः (२) ।
वृषा ते वृष्ण इन्दुः (३) वाजी सहस्रसातमः (४) ॥'
(ऋग्वेदे–अ० २ अ० ४ व० १८ म० १)

## स्कन्धोग्रीवी क्रौष्टुकेः । ३ । २९ ॥

इयमेव 'न्यङ्कुसारिणी' क्रौष्टुकेराचार्यस्य मतेन 'स्कन्धोग्रीवी' नाम छन्दो भवति । आचार्यग्रहणं पूजार्थम् ॥

## उरोबृहती यास्कस्य । ३ । ३० ॥

इयमेव न्यङ्कुसारिणी यास्कस्याचार्यस्य मतेन 'उरोबृहती' नाम्नी भवति ॥

## उपरिष्टाद्बृहत्यन्ते । ३ । ३१ ॥

यदा जागत पादोऽन्त्ये भवति, तदा 'उपरिष्टाद्बृहती' नाम भवति । यथा—

'न तमंहो न दुरितं (१) देवासो अष्ट मर्त्यम् (२) ।
सजोषसो यमर्यमा (३) मित्रो नयन्ति वरुणो अति द्विषः (४) ॥'
(ऋग्वेदे अ० ८ अ० ७ व० १३ म० १)

## पुरस्ताद्बृहती पुरः । ३ । ३२ ॥

स[2] एव जागत पाद पूर्वश्चेद् भवति, शेषाश्च गायत्रा, तदा 'पुरस्ताद्बृहती' नाम भवति । यथा—

'महो यस्पतिः शवसो असाम्या[3] (१) महो नृम्णस्य तूतुजिः (२) ।
भर्ता वज्रस्य धृष्णोः (३) पिता पुत्रमिव प्रियम् (४) ॥'
(ऋग्वेदे–अ० ७ अ० ७ व० ६ म० ३)

'बृहती जागतस्त्रयश्च गायत्रा' (पि० सू० ३।२६) इत्यनेनैव गतार्थमेतत्[4] । संज्ञाविशेषप्रदर्शनार्थं पुनरुच्यते ॥

## क्वचिन्नवकाश्चत्वारः । ३ । ३३ ॥

क्वचिद्वेदे नवाक्षराश्चत्वार पादा दृश्यन्ते, सापि बृहत्येव ।

---

१ 'मत्सीय' इति पूर्णो निचृत्त्वान्न दोष   २. 'यदि जागत पादः पुरो भवति, 'अन्ते च त्रयो' इति लिखितपुस्तकयो ।   ३. 'असामिया' इति पूरणात्पादपूर्ति ।   ४ 'गतार्थत्वात्' इति लिखितपुस्तकयोः ।

यथा—

'युव धासँ मद्यो रन् युव (१) यामधिरर्ततसतम् (२) ।

ता मो वसू सुगोपा स्यात (३) पात नो वृकादघायोः (४) ॥'

(ऋग्वेद-अ० १ अ० ८ व० २१ म० ७)

## वैराजौ गायत्रौ च । ३ । ३४ ॥

यत्र वैराजौ पादौ पूर्वौ दशाक्षरौ भवत ततो गायत्री च सापि बृहती । यथा—

'अग्ने विवस्वदुषसश्चित्र (१) राधो अमर्त्य आ दाशुषे (२) ।

जातवेदो वहा त्व (३) मद्या देवाँ उषर्बुधः (४)' ॥

(ऋग्वेदे-अ० १अ०३व २८ म० १)

## त्रिभिर्जागतैर्महाबृहती । ३ । ३५ ॥

त्रिभिर्जागतै पादैश्छन्दो महाबृहती' नाम । यथा—

'अभीममघ्न्या उत श्रीणन्ति धेनवः शिशुम् (१) सोममिन्द्राय पातवे (२) ।

संवत्सरो वाजमभ्यास निष्पदद् (३) ॥

(ऋग्वेदे-अ० ७ अ० ५ व० २२ म० ४)

## सतोबृहती ताण्डिनः । ३ । ३६ ॥

इयमेव महाबृहती ताण्डिन आचार्यस्य मतेन सतोबृहती' नाम भवति ॥

इति बृहत्यधिकार ।

---

१ सायणभाष्ये तु-'युवं ह्यास्थः' सप्तमी [ ऋग् ] विष्टारबृहती । अष्टिनोर्मध्ये दशकौ विष्टारबृहतीति लक्षणोपेतत्वात् । २-३ अमर्तिय 'वरुथ' इति पूर्णा पादपूरणम् ४ ऋग्वेद एतल्लक्षणोपेता महाबृहत्युष्णवृहतीनाम्नोपलभ्यते सायणभाष्ये चाष्टाक्षरास्त्रयस्त्रार पादा एको द्वादशाक्षर सा महाबृहतीत्येतल्लक्षण चतुर्थाष्टकस्याष्ट माध्याये प्राप्यते । एवमत्रैवायुजौ जागतौ सतोबृहती अष्टाक्षरास्त्रय पादा द्वादशाक्षरौ द्वौ पादौ सा महासतोबृहती, अष्टिनश्चयो द्वौ जागतौ सा ( अपि ) महासतोबृहती, अथ च तृतीयाष्टकस्य प्रथमाध्याये विराड्रूपा सतोबृहती, प्रथमा ष्टकस्य सप्तमाध्याय आद्यौ द्वावष्टाक्षरौ पादौ द्वादशाक्षरस्तृतीयस्ततो द्वावष्टाक्षरौ सा मवमध्या महामहाबृहती, ककुभतीत्याद्याश्च बृहतीभेदा ५ सर्वानुक्रमणिकायां यथा—'चतुर्थे बृहती, तृतीयो द्वादशाश्चेत्पुरस्ताद्बृहती (१) द्वितीय श्चेन्न्यङ्कुसारिणी, उरोबृहती, स्कन्धोग्रीवी वा (२) अन्त्यश्चेदुपरिष्टाद्बृहती (३) अष्टिनोर्मध्ये दशकौ विष्टारबृहती (४) त्रिजागतोर्ध्वबृहती (५) न योदशिनोर्मध्येऽष्टकः पिपीलिकमध्या (६) नवकाष्टैकादश्यष्टिनो विषमं पदा (७) चतुर्नवका बृहत्येव (८) इत्यष्टविधा बृहत्य परिबर्हणाद् बृहतीति निरुक्तकार

## पङ्क्तिर्जागतौ गायत्रौ च ३ । ३७ ॥

यदा द्वौ पादौ जागतौ भवतस्ततो गायत्रौ च, तदा 'पङ्क्ति' नाम छन्दः ॥

## पूर्वौ चेदयुजौ सतः पङ्क्तिः । ३ । ३८ ॥

यत्र पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागतावित्यर्थः, द्वितीयचतुर्थौ च गायत्रौ तच्छन्दः 'सत पङ्क्ति' नाम भवति ॥ यथा—

'यं त्वा देवासो मनवे दधुरिह (१) यजिष्ठं हव्यवाहन (२) ।
यं कण्वो मेध्यातिथिर्धनस्पृतं (३) यं वृषा यमुपस्तुतः (४) ॥'
(ऋग्वेदे–अ० १ अ० ३ व० ९ म० १०)

## विपरीतौ च । ३ । ३९ ॥

यदा तावेव पादौ विपरीतौ भवतः, तदापि सत पङ्क्तिरेव । अयमर्थः—प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ [ च ] जागतौ तदापि सत पङ्क्तिरेव भवति ॥ यथा–

'य ऋष्वः श्रावयत्सखा (१) विश्वेत्स वेद जनिमा पुरुष्टुतः (२) ।
तं विश्वे मानुषा युगे (३) न्द्रं हवन्ते तविषं यतः स्रुचः (४) ॥'
(ऋग्वेदे–अ० ६ अ० ४ व० ३ म० १२)

## प्रस्तारपङ्क्तिः पुरतः । ३ । ४० ॥

यदा जागतौ पादौ पूर्वौ भवतः, गायत्रौ च परतः, तदा 'प्रस्तारपङ्क्ति' नाम । यथा–

'आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभि (१) र्यात ऋष्टिमद्भिरश्वपर्णैः (२) ।
आ वर्षिष्ठया न इषा (३) वयो न पप्तता सुमायाः (४) ॥'
(ऋग्वेदे–अ० १ अ०६ व० १४ म० १)

'पङ्क्तिर्जागतौ गायत्रौ च' (पि० सू० ३।३७) इत्यनेन गतार्थमिदं संज्ञाविशेषज्ञापनार्थं पुनरुच्यते ॥

## आस्तारपङ्क्तिः परतः । ३ । ४१ ॥

यदा जागतौ पादौ परौ भवतः, गायत्रौ च पूर्वौ, तदा 'आस्तारपङ्क्ति' नाम । यथा–

'भद्रं नो अपि वातय (१) मनो दक्षमुत क्रतुम् (२) ।
अधा ते सख्ये अन्धसो वि वो मदे (३) रणन् गावो न यवसे विवक्षसे (४) ॥'
(ऋग्वेदे अ० ७ अ० ७ व० ११ म० १)

## विष्टारपङ्क्तिरन्तः । ३ । ४२ ॥

यदा जागतौ पादौ मध्ये भवतः, आद्यन्तयोश्च गायत्रौ, तदा 'विष्टारपङ्क्तिः' नाम यथा—

---

१. उदाहरणमस्याः प्रस्तारपङ्क्त्या द्रष्टव्यम् । २–३. सायणभाष्ये तु सतोबृहती नाम । ४. कलिकातामुद्रितपुस्तके प्रथममास्तारपङ्क्तिः ।

'अग्ने तव श्रवो वयो (१) महि भ्राजन्ते अर्चयो विभावसो (२) ।
बृहद्भानो शवसा वाजमुक्थ्यं (३) दधासि दाशुषे कवे (४) ॥'
(ऋग्वेदे–अ० ८ अ० ७ व० २८ म० १)

संस्तारपङ्क्तिर्बहि० । ३ । ४३ ॥

यदा सावेव जागतौ पादौ पङ्क्तिभवत मध्ये च गायत्री, तदा 'संस्तारपङ्क्ति' नाम छन्द । यथा—

'पितुभृतो न तन्तुमित्सुदानवः (१) प्रति दध्मो यजामसि (२) ।
उषा अप स्वसुस्तमः (३) संवर्तयति वर्तनिं सुजातता (४) ॥'
(ऋग्वेदे–अ० ८ अ० ८ व० ३० म० ३, ४)

अक्षरपङ्क्तिः पञ्चकाश्चत्वार' । ३ । ४४ ॥

पञ्चाक्षरैश्चतुर्भि पादै अक्षरपङ्क्ति ' नाम छन्द । ननु चत्वारिंशदक्षरा पङ्क्तिश्छन्द, तत्कथं पञ्चकाश्चत्वार ' इत्युच्यते । तत्रोत्तरम्— द्वावप्यल्पशः ' ( पि० सू० ३।४५) इति । असात् सिंहावलोकितन्यायेनाल्पग्रहणमनुवर्तते । तेन पङ्क्तेरल्पत्वं विशेषात्प्रति पादितं भवति यथा—

'प्रेत्नुमित्तु (१) वृधी मनीषा (२) ।
अभ्यस्तुतष्टो (३) रथो न वाजी (४) ॥'
(ऋग्वेदे–अ० ५ अ० ३ व० २५ म० १)

द्वावप्यल्पशः । ३ । ४५ ॥

पञ्चग्रहणमनुवर्तते । पञ्चाक्षराभ्यां पादाभ्यामल्पशः पङ्क्तिनाम छन्दो भवति, क्वचिदेव वेदे न सर्वत्र ॥

पदपङ्क्ति' पञ्च । ३ । ४६ ॥

पञ्चका इत्यनुवर्तते । यदा पञ्चाक्षरा पञ्चपादा भवन्ति, तदा 'पदपङ्क्ति' नाम छन्द । यथा—

'घृतं न पूतं (१) तनूररेपाः (२) ।
शुचि हिरण्यम् (३) तत्ते रुक्मो न (४) रोचत स्वधावः (५) ॥'
(ऋग्वेदे–अ० ३ अ० ५ व० १० म० ६)

चतुष्कपद्गी त्रयश्च । ३ । ४७ ॥

चकार 'पञ्चका ' इत्यनुकर्षणार्थं । यदा प्रथमश्चतुरक्षर' पाद द्वितीय षडक्षर , तत त्रय पञ्चाक्षरास्तदा पञ्चपदा पङ्क्तिरेव । यथा—

---

१ कात्यायनाचार्येणेद छन्दो गायत्रीछन्दोभेदमध्ये परिगणितम्, सायणाचार्येण तु 'द्विपदा' इत्युक्तम् २ भुरिग्रूपत्वादेकाक्षराधिक्यम्

'अधा॒ह्य॑ग्ने (१) क्रतो॑र्भ॒द्रस्य॒ (२) दक्ष॑स्य सा॒धोः (३) ।
र॒थीरृ॒तस्य॑ (४) बृ॒ह॒तो ब॒भूथ॑ (५) ॥'

(ऋग्वेदे—अ० ३ अ० ५ व० १० म० २)

**पथ्या पञ्चभिर्गायत्रैः । ३ । ४८ ॥**

पञ्चभिरष्टाक्षरै पादै 'पथ्या' नाम पङ्क्तिर्भवति । अस्योदाहरणम्—

'अक्ष॒न्नमी॑मदन्त॒ हि (१) अव॑ प्रि॒या अ॑धूषत (२) ।
अस्तो॑षत॒ स्वभा॑नवो॒ (३) विप्रा॒ नवि॑ष्ठया म॒ती (४) योजा॒ न्विन्द्र॑ ते॒ हरी॑ (५)॥'

(ऋग्वेदे—अ० १ अ० ६ व० ३ म० २)

इति पैङ्क्त्यधिकारः ।

अथ त्रिष्टुब्जगत्यधिकार ।

**जगती षड्भिः । ३ । ४९ ॥**

'गायत्रै ' इत्यनुवर्तते । गायत्रै षड्भि पादै 'जगती' नाम छन्दो भवति । यथा—

'आपो॒ न दे॒वीरुप॑यन्ति (१) हो॒त्रिय॑म॒व. प॑श्यन्ति॒ (२) वित॑तं॒ यथा॒ रजः (३)।
प्रा॒चैर्दे॒वासः॒ प्रण॑यन्ति (४) देव॒युं ब्र॑ह्म॒प्रिय॑ (५) जोषयन्ते॒ व॒रा इ॑व (६) ॥'

(ऋग्वेदे—अ. १ अ. ६ व. ४ म. २)

**ऐकेन त्रिष्टुब्ज्योतिष्मती । ३ । ५० ॥**

त्रिष्टुभ प्रस्तुतत्वात्प्रत्यासत्तेश्च तस्या एव संवन्ध । एकेन त्रैष्टुभेन पादेनाविकाराच्चतुर्भिर्गायत्रै पञ्चपात् 'त्रिष्टुब्ज्योतिष्मती' नाम छन्दो भवति । त्रैष्टुभेन सह 'पञ्चभिर्गायत्रै ' (पि० सू० ३।४८) इत्युक्ते चत्वार एव गायत्रा पादा लभ्यन्ते । यथोपाध्यायेन सह पञ्च शिष्या आगता इत्युक्ते उपाध्यायपञ्चमा प्रतीयन्ते ॥

---

१ 'नु इन्द्र ते' इति व्यूहात्पादपूर्ति २ **सर्वानुक्रमणिकायां कात्यायनोक्ता यथा—'पञ्चमं पङ्क्तिः पञ्चपदा (१) अथ चतुष्पदी. विराड्दशका (२) अयुजौ जागतौसतोबृहती (३) युजौ चेद्विपरीता (४) आद्यौ चेत्प्रस्तारपङ्क्तिः (५) अन्तौ चेदास्तारपङ्क्ति (६) आद्यन्तौ चेत्संस्तारपङ्क्तिः (७) मध्यमौ चेद्विस्तारपङ्क्तिः (८)'** इत्यष्टविधा पङ्क्तय पङ्क्ति पञ्चपदेति निरुक्तकार ३ 'जगतीनाम पङ्क्तिर्भवति' इति लिखितपुस्तके ४. एकपदा त्रिष्टुब् जगती च वाहृच्ये प्राप्येते । ५. 'एकेनेति 'पथ्या पञ्चभिर्गायत्रै ३ । ४८ ॥' इत्यतो गायत्रपादस्य प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्यैव संवन्ध' । गायत्रेणैकेन पादेनाधिकारात् त्रिभिस्त्रैष्टुभै पादैश्चतुष्पात् त्रिष्टुप् 'ज्योतिष्मती' नाम । ' इति कलिकातामुद्रितपुस्तकस्य टिप्पण्या लिखितपुस्तके च पाठभेद ।

## तथा जगती । ३ । ५१ ॥

एकेन जागतेन पादेन चतुर्भिर्गायत्रैः पादैः पञ्चपाज्जगती 'ज्योतिष्मती' नाम छन्दो भवति ॥

## पुरस्ताज्ज्योतिः प्रथमेन । ३ । ५२ ॥

प्रथमेन त्रैष्टुभेन पादेन शेषैश्च गायत्रैः पादैः 'पुरस्ताज्ज्योतिः' नाम त्रिष्टुप् भवति । यथा—

'सम्रुं पूर्वीम्ब्रृ पो हू सत्वा यः शूर्रो (१) मघवा यो र्येषाः (२) ।
प्रतीचश्चियोऽधीयाम् (३) वृषण्वान् ययमूर्पः (४) चित्तमसो विहुन्ता (५)॥'
(ऋग्वेदे–अ० २ अ० ४ व० ११ म० ५)

पूर्वेणैव गतार्थत्वाद्विशेषसंज्ञाज्ञापनार्थमिदम् । 'तथा जगती' इत्यनुवर्तनीयम् । येनाधन जागतेन पादेन चतुर्भिश्च गायत्रैः 'पुरस्ताज्ज्योतिः' नाम जगती भवति । यथा—

'भवाप्युभिर्जर्मे वर्तति सूर्यो म्युर्णा (१) अग्ना मुहां वो अर्चिषां (२) ।
आयुरुषातामश्विना या (३) तये रथं प्रास्वीषीर्देय (४) सविता जगत् पृथग्(५)॥'
(ऋग्वेदे–अ० २ अ० २ व २७ म० १)

## मध्येज्योतिर्मध्यमेन । ३ । ५३ ॥

यदा मध्यमस्त्रैष्टुभः पादो भवति, उभयतश्च द्वौ द्वौ गायत्रौ, तदा 'मध्येज्योतिः' नाम त्रिष्टुप् भवति । मध्येज्योतिरित्यलुक्समासः ।

'तथा जगती' इत्यनुवर्तनीयम् । तेन मध्यमेन जागतेन एकेन जागतेन मध्यमेन तृतीयेनोभयतश्च द्वौ द्वौ गायत्रौ यदा 'मध्येज्योतिः' नाम जगती भवति । यथा—

## उपरिष्टाज्ज्योतिरन्त्येन । ३ । ५४ ॥

यदा चत्वारो गायत्राः पादा भवन्ति अन्त्ये च त्रैष्टुभः, तदा 'उपरिष्टाज्ज्योतिः' नाम त्रिष्टुप् भवति ।

---

१ एकेन गायत्रेण पादेन त्रिभिर्जागतैश्चतुष्पाद् 'ज्योतिष्मती' नाम। इति च । २ प्रथमेन गायत्रेण पादेन शेषैश्च त्रैष्टुभैस्त्रिभिः 'पुरस्ताज्ज्योतिः त्रिष्टुप्' ।' इत्यपि च । ३ गायत्रेण पादेन त्रिभिर्जागतैः इति च तत्रैव । ४ 'यदा मध्यमो गायत्रस्तृतीय पादो भवति उभयतश्च द्वौ त्रैष्टुभौ यदा पूर्वौ अन्तिमश्चैकस्त्रैष्टुभस्तदा मध्ये ज्योतिर्नाम त्रिष्टुब्' भवति। इति च। सायणभाष्ये तु (अ ५ अ ८ व १४) मध्ये ज्योतिस्त्रिष्टुब्' यतोऽष्टकस्ततो ज्योतिरिति । ५ एकेन गायत्रेण मध्यमेन तृतीयेनोभयतश्च जागताभ्यां प्रथमद्वितीयाभ्यां चतुर्थेन च जागतेन मध्येज्योतिर्जगती' नाम भवति । इत्यपि च । ६ यदा प्रथमस्त्रैष्टुभाः पादा भवन्ति, अन्त्ये च गायत्रस्तदा 'उपरिष्टा ज्ज्योतिस्त्रिष्टुब्' नाम भवति । इति क मु पु टिप्पण्यां लिखितपुस्तके च ।

यथा—

'जयतं च प्रस्तुतं च (१) प्रचावतं प्रजां चे (२) धृत्तं द्रविणं च धत्तम् (३)।
सजोषसा उषसा (४) सूर्येण चोर्जं नो धत्तमश्विना (५) ॥'
(ऋग्वेदे–अ० ६ अ० ३ व० १५ म० ११)

तथा 'जगती' इत्यनुवर्तनीयम्। तेनान्तेन जागतेन पादेन शेषैश्च गायत्रैश्चतुर्भिः रुपरिष्टाज्ज्योतिः'नाम जगती भवति। यथा—

'हंसाविव पतथो (१) अध्वगाविव सोमं सुतं (२) महिषेवाव गच्छथ (३)।
सजोषसा उषसा (४) सूर्येण च त्रिर्वर्तिर्यातमश्विना (५) ॥
(ऋग्वेदे. अ. ६ अ. ३ व. १५ म. ८)

इति त्रिष्टुब्जगत्यधिकार ।

## एकस्मिन्पञ्चके छन्दः शङ्कुमती । ३ । ५५ ॥

१ 'तथा जगतीत्यनुवर्तनीयम्। तेनान्तेन गायत्रेण शेषैश्च जागतैस्त्रिभिः 'उप-ष्टाज्ज्योतिर्जगती' नाम भवति' इति क. मु. पु. टिप्पण्यां लिखितपुस्तके च। **सर्वानुक्रमणिकायां कात्यायनाचार्योक्ता** यथा—'षष्ठं त्रिष्टुप् त्रैष्टुभ-दा (१) द्वौ तु जागतौ यस्याः सा जागते जगती, त्रैष्टुभे त्रिष्टुप् (२) वै-जौ जागतौ चाभिसारिणी (३) नवकौ वैराजस्त्रैष्टुभश्च (४) द्वौ वै-जौ नवकस्त्रैष्टुभश्च विराट्स्थाना (५) एकादशिनस्त्रयोऽष्टकाश्च विरा-रूपा (६) द्वादशिनस्त्रयोऽष्टकाश्च ज्योतिष्मती (७) यतोऽष्टकस्ततो योतिश्चत्वारोऽष्टका जागतश्च महाबृहती (८) मध्ये चेद्यवमध्या ९) आद्यौ दशकावष्टकास्त्रयः पङ्क्त्युत्तरा विराट्पूर्वा वा (१०)' इति शविधास्त्रिष्टुभ ३. **कात्यायनाचार्योक्ता** यथा—'सप्तमं जगती, जागतपदा १) अष्टिनस्त्रयस्तौ च द्वौ महासतोबृहती (२) अष्टकौ सप्तकः षट्कौ शको नवकश्च षडष्टका महापङ्क्तिः (३) इति त्रिविधा जगत्य. ४. दैक पञ्चाक्षर पादो भवति त्रयश्च द्वादशाक्षरास्तदा 'शङ्कुमती जगती' नाम न्दो भवति।' इति क. मु. पु टिप्पण्या लिखितपुस्तके च । 'अनादेशे चत्वार.' ति परिभाषया चत्वार एकादशिन पादा इत्यर्थ । 'जागतसूक्ते स्थिता गती त्रिष्टुप्सूक्ते स्थिता त्रिष्टुप्' 'नात्र क्रमादर' इति तद्भाष्यकार । तैस्तदुदाहरणा-ग्पि तत्र दर्शितानि पिङ्गलोक्ताद्विलक्षणमिदं छन्द । अत्रापि क्रमो न विवक्षितः. दमेव च्छन्द **पिङ्गलाचार्येण** जगतीज्योतिष्मतीसंज्ञकत्वेनोपादाय पुरस्ताज्ज्योति-मतीत्वादिना त्रिविधमुक्तम् **कात्यायनेन** तु चतुश्चत्वारिंशदक्षरत्वात्त्रिष्टुप्छन्दोमध्ये रिगणितम् एतेषामुदाहरणान्यप्याश्वलायनशाखाया बहूनि सन्ति बाहुल्यभयेनात्र दर्शितानि. तत्रैतादृशि त्रिष्टुप्छन्दसि विशेषमाह **कात्यायनाचार्यः**—'बहुनापि ष्टुभ एव' इति अस्यार्थस्तु त्रिष्टुभश्चतुश्चत्वारिंशदक्षरत्वे प्राप्ते सति बहुभिरक्षरैरूना

यदैकः पञ्चाक्षरः पादो भवति अन्यः षडक्षराः, तदा 'शङ्कुमती' नाम गायत्री । छन्दोग्रहणे प्रकृते पुनश्छन्दोग्रहणं छन्दोमात्रप्रतिपत्त्यर्थम् । तेन सर्वेषु छन्दःसु पञ्चाक्षरैकपादलक्षिता शङ्कुमती भवति । इतरथा ह्यनन्तरं सम्प्रत्ययः स्यात् ॥

## षट्के ककुम्मती । ३ । ५६ ॥

एकस्मिन् षडक्षरे पादे, अन्येषु यथालक्षणमुपात्तेषु च्छन्दोमात्र, ककुम्मती नाम ॥

## त्रिपादणिष्ठमध्या पिपीलिकमध्या । ३ । ५७ ॥

यदाद्यन्तौ पादौ षडक्षरौ मध्यमोऽल्पतराक्षरः तदाणिष्ठमध्या सती 'पिपीलिकमध्या' नाम भवति । अयमर्थः —आद्यन्तौ पादावष्टाक्षरौ, मध्यमस्त्र्यक्षरः, एवं त्रिपाद्गायत्री पिपीलिकमध्या नाम भवति । एवं चतुरक्षरे पञ्चाक्षरेऽपि मध्यमे पादे पिपीलिकमध्या सिद्ध्यति । यत्किंचित्त्रिपाच्छन्दो लघुमध्यमपादं तत्सर्वं पिपीलिकमध्यमुच्यते ॥

---

अपि विराड्रूपादित्रिष्टुबधिकारोक्ता त्रिष्टुभ एव स्युः एतेन पञ्चभिश्चतुर्भिस्त्रिभिर्वाक्षरैरूना अपि ऋचस्त्रिष्टुप्सूक्तस्थास्त्रिष्टुभ एव, न तु तासां निचृत्पङ्क्तित्वभुरिक्पङ्क्तित्वादि ५. श्च तृतीयाध्यायसमाप्तिसूत्राणामुदाहरणानि वृत्तिकृता न दर्शितानि यथाप्राप्तकानिचिदप्रदर्श्यन्ते तत्तत्सूत्रटिप्पण्याम् १ ककुपती, ककुम्मती, इति क पुस्तके ।

१ उष्णिहो यथा—'उतासो देववदिति (१) रुष्यतो नाम उग्र (२) । उरुसन्तमवतो (३) वृद्धश्रवस (४) ॥ (इति भवदेव ।) २ षडक्षरा, एकाक्षरी, इति लिखितपुस्तकयो ।

अनुष्टुभो यथा—'पितु नु स्तोषम् (१) महो धर्माणं तविषीम् (२) । यस्य त्रितो व्योजसा (३) वृत्रं विपर्वमर्दयत् (४) ॥' (ऋग्वेदे– अ॰ २ अ॰ ५ व॰ ६ म॰ ४)

२ अनुष्टुभो यथा— स पूर्व्यो महोनां (१) वेनः क्रतुभिरानजे (२) । यस्य द्वारा मनुः पिता (३) देवेषु धिय आनज (४) ॥ (सामवेदे–पू॰ प्र॰ ४ अ॰ २ म ४)

बृहत्या यथा—'इन्द्र याहि मत्सु (१) चित्रेण देवराधसा (२) । स योनः प्राह्णुदरं (३) सपीतिभिरासोमेभिरुरु स्फिरम् (४) ॥' (इति भवदेव ।)

पङ्क्त्या यथा— सदत्र सुवीर्यं (१) ततक्षति अदाभ्यम् (२) देवानां य इन्मनो (३) यजमान इयक्षति (४) ॥ (इति भवदेव ।) ३ त्र्यक्षर , षडक्षर, इति लिखित पुस्तकयो ।

त्रिष्टुभो यथा—इमन्तमुपस्थं (१) मधुना संसृजामि (२) प्रजापतेर्मुखमेतद्द्वितीयं (३)। तेन पुंसोऽभिभवासि (४) सर्वान्कामान्वशिष्यसि राज्ञी (५)॥ (इति भवदेव ।)

१ गायत्र्या यथा– मुमिर्येमामो हर्म्यतो (१) विपश्चुणो (२) । राजा देवः समुद्रियः (३) ॥' (ऋग्वेदे–अ॰ ७ अ॰ ५ व॰ १५ म॰ १६)

उष्णिहो यथा—'हरी यस्य सुयुजा विव्रता (१) वेरर्वन्ता नु शेपा (२)। उभा रजी न केशिना पतिर्दन् (३) ॥ (ऋग्वेदे–अ॰ ८ अ॰ ५ व॰ २६ म॰ २)

## विपरीता यवमध्या । ३ । ५८ ॥

आद्यन्तौ पादौ लघ्वक्षरौ, मध्यमश्च बह्वक्षर, सा गायत्री 'यवमध्या' नाम भवति । एवमुष्णिगादिष्वपि योज्यम् ॥

## ऊनाधिकेनैकेन निचृद्भुरिजौ । ३ । ५९ ॥

चतुर्विंशत्यक्षरा गायत्री एकेनाक्षरेण न्यूनेन सा 'निचृत्' इति विशेषसंज्ञा लभते । एकेनाधिकेन 'भुरिक्' इति । एवमुष्णिगादिष्वपि द्रष्टव्यम् ॥

---

**अनुष्टुभो** यथा—'पर्यू॒षु प्र ध॑न्व॒ वाज॑सातये॒ (१) परि॑ वृ॒त्राणि॑ स॒क्षणि॑ (२)। द्वि॒षस्त॒रध्या॑ ऋण॒या न॑ ईयसे (३) ॥' (ऋग्वेदे–अ० ७ अ० ५ व० २२ म० १)

**बृहत्या** यथा—'अवीभोवीरमध्यसीमदेषुगाय (१) गिरे सहा विचेतम् (२)। इन्द्रं नामश्रुत्यं शाकिनं वचो यथा (३) ॥' (इति भवदेव ।)

१ **गायत्र्या** यथा—'समुनेयो वसूना (१) यो रायामानेताय इडायाम् (२)। सोमो य सुक्षिमीनाम् (३) ॥' (इति भवदेव. ।)

**उष्णीहो** यथा—'सु॒दे॒व॑ स॑महासति (१) सु॒वीरो॑ नरो मरु॒तः स मर्त्य॑ (२)। यं त्राय॑ध्वे॒ स्याम॒ ते (३) ॥' (ऋग्वेदे–अ० ४ अ० ३ व० १३ म० १५)

२ **निचृद्गायत्र्या यथा**—'अग्निमिन्धानो मनसा (१) धियं सचेतमर्त्यं (२)। अग्निमिन्धे विवस्वभि. (३) ॥' (सामवेदे–पू० प्र० १ अ० १ म० ९)

**निचृदुष्णिहो** यथा—'इ॒षे त्वो॒र्जे त्वा॑ वा॒यव॑स्थ. (१) दे॒वो व॑. सवि॒ता प्रार्प॑यतु (२)। श्रेष्ठ॑तमाय॒ कर्म॑णे (३)।' (यजुर्वेदे–अ० १ म० १)

**निचृदनुष्टुभो**—'द्वेपस्ते धूम ऋण्वति (१) द्विविषच्छुक्र आतत (२)। शूरो नहि द्युतात्वम् (३) कृपा पावकरोचन (४) ॥' (इति भवदेव ।)

**निचृद्बृहत्या** यथा–'बलं॑ धेहि त॒नूषु॑ नो॒ (१) बल॑मिन्द्रान॒ळुत्सु॑ नः (२)। बलं॑ तो॒काय॒ तन॑याय (३) जी॒वसे॒ त्वं हि ब॑ल॒दाऽअसि॑ (४) ॥'

(ऋग्वेदे–अ० ३ अ० ३ व० २२ म० १८)

**निचृत्पङ्क्त्या** यथा—'अग्ने॒ तव॒ श्रवो॒ वयो॒ (१) महि॑ भ्राजन्ते अ॒र्चयो॑ विभावसो (२)। बृह॑द्भानो॒ शव॑सा॒ वाज॑मु॒क्थ्य॑ (३) दधा॑सि दा॒शुषे॑ कवे (४) ॥' (ऋग्वेदे–अ० ८ अ० ७ व० २८ म० १)

**निचृत्त्रिष्टुभो** यथा—'इदन्त एकं पर ऊत एकं (१) तृतीयेन ज्योतिषा सविशस्व (२)। सवेशनस्तन्वे चारुरेधि (३) प्रियो देवाना परमे जनित्रे (४) ॥' (सामवेदे–पू० प्र० १ अ० २ म० ३)

**निचृज्जगत्या** यथा—श॒तक्र॑तुमर्ण॒वं शा॒किनं॒ नरं॒ (१) गिरो॑ म॒ इन्द्र॒मुप॑यन्ति वि॒श्वतः॑ (२)। वा॒ज॒सनिं॑ पू॒र्भिदं॑ तूर्णि॑म॒प्तुर॑म् (३) धा॒म॒साच॑मभि॒षाचं॑ स्व॒र्विद॑म् (४)॥ (ऋग्वेदे–अ० ३ अ० ३ व० १५ म० २)

## द्वाभ्यां विराट्स्वराजौ । ३ । ६० ॥

'ऊनाधिक' ग्रहणमनुवर्त्तते । द्वाभ्यामक्षराभ्यां न्यूनाधिकाभ्यां गायत्री यथाक्रम विराट्–स्वराट्–संज्ञा भवति । एवमुष्णिगादिष्वपि द्रष्टव्यम् ॥

---

३ भूरिगनुष्टुभो यथा— तां म आवह जातवेदो (१) लक्ष्मीमनपगामिनीम् (२)। यस्यां हिरण्यं विन्देयं (३) गामश्वं पुरुषानहम् (४) ॥' ( इति भवदेव ।)

भूरिक्त्रिष्टुभो यथा— य ऋतुभ्यो वृत्रमिव वाचमिष्य (१) उपस्तिरेवैतरो धेनुमीडे (२) । ये वातजूतस्तरणिभिरेवै (३) परिद्यो सद्यो अपसो बभूवु (४) ॥' इति भवदेव '

भूरिग्जगत्या यथा—'इमो न विद्वां अयुजिरिय धुरि (१) त यहानि प्रसरभिमव ध्रुवम् (२) । नास्य वेश्मि विमुचनावृतं पुन (३) विद्वान्पथ पूर एत अञ्जुनेपति (४) ॥ ( इति भवदेव । )

१ विराड्गायत्र्या यथा—'अ भी षु ण सखीना (१) मविता जरितृणाम् (२) । शतं भवास्यूतये (३) ॥' ( इति भवदेव । )

विराडुष्णिहो यथा— द्युत गायत्र नकवनस्याह ( १ ) विश्चिरिरे माश्विनाबाम् (२) । भाक्षीद्धमसतीदम् (३) ॥ (इति भवदेव ।)

विराडनुष्टुभो यथा—'यदि वीरो अनुष्या (१) अमिमि धानमस्य (२)। अजुह्व म्यमानुषक् (३) ॥' (सामवेदे–पू० प्र० १ अ २)

विराड्बृहत्या यथा— अग्ने विवस्वदुषस (१) श्चित्र राधो अमर्त्य (२) । आ दाशुषे जातवेदो वह त्व (३) मद्या देवा उपर्बुध (४) ॥' ( इति भवदेव ।)

विराट्त्रिष्टुभो यथा— परिधत्त वाससैनां (१) दीर्घायुष कृणुत दीर्घमायु ( ) । शत च जीव शरद सुवर्चा वसूनि चार्यो विभजासि जीवन् (३) ॥ (इति भवदेव ।)

विराड्जगत्या यथा–युयमस्मभ्यं धिषणाभ्यस्परि (१) विद्वांसो विश्वा नर्याणि भोजना (२)। द्युमन्तु वाज वृषशुष्ममुत्तम (३) मा नो रयिमृभवस्तक्षता वय (४)॥ (ऋग्वेदे–अ० ३ अ० ७ व० ८ म० ८)

२ स्वराड्गायत्र्या यथा–'विद्वांसाविद्दुरं पृच्छे (१) दविद्वानित्थापरो अचेताः (२) । नूचिन्नु मर्ते अक्रौ (३) ॥ (ऋग्वेदे–अ १ अ० ८ व० २२ म० २)

स्वराडनुष्टुभो यथा—'लवणाभ्मसि जातोऽसि (१) उभोऽसि हृदय मम (२) । लवणस्य पृथिवी माता (३) लवणस्य वरुण पिता (४) ॥ (इति भवदेव ।)

स्वराड्बृहत्या यथा—'वितर्तुरस्ते मघवन् (१) विपश्चितोऽर्यो विपो जनानाम् (२) । उपक्रमस्व पुरुरूपमा (३) भरं वाजं नेदिष्ठमूतये (४) ॥' (ऋग्वेदे–अ० ५ अ० ७ व० १० म० ४)

स्वराट्त्रिष्टुभो यथा–'इन्द्रासोमा परि वां भूतु विश्वतः (१) इयं मतिः कक्ष्या श्वेव वाजिनी (२) । यां वां होत्रां परिहिनोमि मेधया (३) ऽमा ब्रह्माणि नृपतीव जिन्वतम् (४) ॥' (ऋग्वेदे-अ ५ अ० ७ व० ६ म० ६)

**आदितः संदिग्धे । ३ । ६१ ॥**

यदा षड्विंशत्यक्षरं छन्दो भवति, तदा किं प्रतिपत्तव्यम्। किं गायत्री स्वराड्, उतोष्णिग्विराड्, इति। एवं संदिग्धे सति छन्दस्यादिभूतात् पादान्निर्णय कर्तव्य । यदि प्रथम पादो गायत्र्यास्तदा गायत्र्येवासौ । अथोष्णिहस्तदोष्णिग् इति । एवं सर्वत्र ॥

**देवतादितश्च । ३ । ६२ ॥**

इदमपरं निर्णयनिमित्तमुच्यते । संदिग्धे छन्दसि देवतादेश्च निर्णयः कर्तव्य. । 'आदि'ग्रहणं स्वरादिपरिग्रहार्थम् ॥

कस्य छन्दस का देवता यथा निर्णय· कर्तव्य इत्यपेक्षायामिदमुच्यते—

**अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणा विन्द्रो विश्वेदेवा देवताः । ३ । ६३ ॥**

गायत्र्यादीनां जगतीपर्यन्तानां यथाक्रममग्न्यादयो देवता वेदितव्या । तत्र संदिग्धे छन्दसि यदाग्नेयं तदा गायत्री । यदि सावित्रं तदोष्णिग् । एवं सर्वत्र । वैदिकेष्वेव छन्द सु निचृद्भुरिजौ, तथा विराट्स्वराजौ च दृश्येते। न लौकिकेषु । अतो लौकिकेषु संदेहाभावात्तन्निर्णयभूता देवतादयो नेष्यन्ते ॥

**स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः । ३ । ६४ ॥**

स्वरा गायत्र्यादिषु क्रमेण द्रष्टव्या. ॥

**सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः । ३ । ६५ ॥**

गायत्र्यादिषु क्रमेण वर्णा वर्णनिर्णयनिमित्तमभिधीयन्ते ॥

**आग्निवेश्यकाश्यपगौतमाङ्गिरसभार्गवकौशिकवाशिष्ठानि गोत्राणि ३ । ६६ ॥**

गायत्र्यादीना क्रमेणैतानि गोत्राणि भवन्तीति वाक्यशेषः । अत्र रोचनाभा कृतय , श्यामान्यतिच्छन्दासि, इत्येवमादिकमधीयते छान्दसा । तन्नोपपद्यते। कृतीनामतिच्छन्दसा च निचृद्भुरिजोर्विराट्स्वराजोश्च प्रदेशाभावात्, कश्चिन्नास्ति संशय । यस्य निर्णयनिमित्तं च वर्णोपन्यास. क्रियते। तदपि ऋषिदेवतास्वरवर्णाना ज्ञानान्नि श्रेयसमिच्छन्ति छान्दसौ ॥

इति भट्टहलायुधकृताया पिङ्गलछन्दोवृत्तौ तृतीयोऽध्याय ।

---

१. यथा 'विद्वासो विदुर' (ऋग्वेदे अ० १ अ० १ व० २२) इति मन्त्रस्य स्वराड्गायत्रीविराडुष्णिक्त्वसंदेहे आद्यपादस्याष्टाक्षरत्वाद्गायत्र्येवासौ । एवं निचृदादीनामुदाहरणान्यालोच्योह्यम्, वस्तुतस्तु यत्रानुक्रमणिकायां छन्दो नाभिहितं तत्रैव संदेहस्तन्निर्णयार्थमिदं तादृशां मन्त्राणां दुर्घटत्वादुदाहरणदर्शनमपि दुष्करमिति २. 'मित्रावरुणा' इति लिखितपुस्तके । ननु भगवता पिङ्गलाचार्येण कृतो

चतुर्थोऽध्याय ।

## चतुःशतमुत्कृतिः । ४ । १ ॥

चतुरधिकं शत चतुःशतम् । मध्यमपदलोपी समास । अथ वा चत्वारि च शतं च चतुःशतम् । द्वन्द्वसमास । कर्मधारयस्तु नेष्यते । तत्र चतुःशतानीति प्राप्नोति । यत्र चतुःशतमक्षराणां संख्या भवति तत् 'उत्कृति' नाम छन्द । यथा—

---

योऽयं देवतादिनियम स किं विधिर्नियमोऽनुवादार्थो वा । नाद्यस्तत्तद्देवानुक्रमणिकाकारै स्मृतिकारैश्च संहितास्थमन्त्राणां कर्मकाण्डीयमन्त्राणां च देवतादीनां विहितत्वेनापूर्वत्वाभावात् । किंच 'गायत्र्या सविता प्रसवेदस' इति, 'त्रिष्टुभोऽग्निर्देवता' इत्यादिना सप्तव्याहृतीनामपि छन्दसां देवतानां चानेन महाविरोधापातात् । यथाह संवर्ते –'व्याहृतीनां च सर्वेषामार्षं चैव प्रजापति । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तिरेव च ॥ त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै । अग्निर्वायुस्तथा सूर्यो बृहस्पतिरपांपति । इन्द्रश्च विश्वेदेवाश्च देवता समुदाहृता ॥' नापि द्वितीयोऽनन्तव्यभिचारात् । नापि तृतीयो निष्फलत्वाद्विरोधापाताच्च । अत्रेदमवधेयम्—येषां मन्त्राणां छन्दोदेवतादीनि नोक्तानि अपि तु विराट्स्वराडादिलक्षणद्वयलक्षितत्वेन 'गायत्र्युष्णिग्भ्याम्' 'उष्णिगनुष्टुब्भ्याम्' इत्यादि संशयो भवेत् तन्त्रापवादेन क्वचिद्देवतादिभ्यश्च विरोध परिहरणीय इत्यभिप्रायता भगवता पिङ्गलाचार्येण 'आदित संदिग्धे' (पि० सू० ३ । ६१) इत्यादि सप्त सूत्राणि विहितानि, इति । एतेषामुदाहरणानि बहूनां वेदशाखानामनुपलम्भान्नोक्तानि । यत्तु शुक्लमुख सितानीयाभीच लोहितमेव च । श्याम तु स्वरित विद्या दग्निरुक्तस्य देवता ॥ नीचे सोमं विजानीयात्स्वरिते सविता भवेत् । उदात्त ब्राह्मण विद्याभीचं क्षत्रियमेव च ॥ वैश्य तु स्वरित विद्यादुदात्त तु भारद्वाजम् । नीच गोतममित्याह गार्ग्यं तु स्वरित विदु ॥ विद्यादुदात्तां गायत्री नीचं त्रैष्टुभमेव च । जागतं स्वरित विद्यादेवमेव नियोगत ॥ गान्धर्ववेदे ये प्रोक्ता सप्त षड्जादय स्वरा । त एव वेदे विज्ञेयास्त्रय उदात्तादय स्वरा ॥ उच्चौ निषादगान्धारौ नीचावृषभधैवतौ । शेषास्तु स्वरिते ज्ञेया षड्जमध्यमपञ्चमा ॥ इति याज्ञवल्कीयशिक्षोक्तेस्त्रिष्टुभो लोहितो वर्ण, सोमो देवता ऋषभधैवतौ स्वरौ गोतमऋषि । जगत्या श्यामो वर्ण सविता देवता षड्जमध्यमपञ्चमा स्वरा गार्ग्यऋषिरित्यादिभि पिङ्गलोक्तेनानैक्य तदपि शाखाभेदेन परिहरणीयम्

१ उत्कृत्यादिकृतिपर्यन्तानामुदाहरणानि धीमता हलायुधेन न दर्शितानि अतस्तान्युपक्रमणिकाभाष्योपलब्धानि, अन्यत्र सुप्रसिद्धानि च सर्वोपकृतये वृत्तिमध्येऽस्माभिर्निवेशितानि । अत्राक्षराधिक्यमपि न दोषावह चतु शतशब्दस्य त्रयोदशगायत्रीपादलक्षकत्वात्, गायत्रीपादानामष्टाक्षरन्यूनाधिक्यमपि संभवति तत्तु प्राग्व्याहृतम् । उत्कृत्यादिकृतिपर्यन्तेषु छन्दःसु पादनियमो न केनापि मुनिना दर्शित । अनुक्रमणिकाभाष्यकार दर्शिता नियमास्तु क्वचिद्दृश्यन्ते

'होता यक्षदृश्विनौ छागस्य (१) हुविष आत्तामद्य मध्यत (२) तो मेद उद्भृतं (३) पुरा द्वेषोभ्य.(४) पुरा पौरुषेय्या गृभो (५) घस्तां नूनं घासे अज्राणां (६) यवसप्रथमानाँ (७) सुमत्क्षराणां शतरुद्रियाणाम् (८) अग्निष्वात्तानां पीवोपवसनानां (९) पार्श्वतः श्रोणितः शितामतः (१०) उत्सादतोऽङ्गादङ्गादवत्तानां (११) करत एवाश्विना जुषेतां (१२) हविरेवाश्विना जुषेताम् (१३)' (यजुर्वेदे—अ० २१ म० ४३)

## चतुरश्चतुरस्त्यजेदुत्कृतेः । ४ । २ ॥

चतु शताक्षराच्छन्दस क्रमेण चतुरश्चतुरः सङ्ख्याविशेषांस्त्यजेत् । एतदुक्तं भवति । उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दांस्यन्यानि स्थापयेत् । अष्टाचत्वारिंशदक्षर यावत् ॥

## तान्यभिसंव्याप्रेभ्यः कृतिः । ४ । ३ ॥

तान्युत्कृतेरनन्तराणि च्छन्दासि अभि-स-वि-आङ्-प्र इत्येतेभ्य पराणि 'कृति'सज्ञानि भवन्ति । तत्र शताक्षरं छन्द **'अभिकृतिः'** । यथा—

'देवो अग्नि. स्विष्टकृत् (१) देवान्यक्षद्यथायथं (२) होतारावन्द्रमश्विना (३) वाचा वाचं सरस्वती (४) मग्निं सोमं स्विष्टकृत् (५) स्विष्ट इन्द्रः सुत्रामा (६) सविता वरुणो भिष (७) गिष्टो देवो वनस्पति.(८) स्विष्टा देवा आज्यपाः स्विष्टो (९) अग्निरग्निना होता होत्रे स्विष्टकृ (१०) द्यशो न दधदिन्द्रियम् (११) ऊर्जमपचितिं स्वधा वसुवने (१२) ॥' (यजुर्वेदे—अ० २१ म० ५८)

पण्णवत्यक्षरं **संकृतिः** । यथा—

'देवो अग्निः स्विष्टकृत् (१) सुद्रविणा मन्द्रः कवि (२) सत्यमन्मा यजी होता (३) होतुर्होतुरायजी या (४) नग्ने यान् देवानयाड्याँ (५) अपि प्रेषैते होत्रे अमत्सत (६) ताँ ससनुषी होत्रां देवंगमां (७) दिवि देवेषु यज्ञमेरयेमं (८) स्विष्टकृच्चाग्ने होताभू (९) वसुवने वसुधेयस्य नमो वाके वीहि यज (१०) ॥

(तैत्तिरीयब्राह्मणे अ० ३ अ० ६ अ० १३ म० १)

द्वानवत्यक्षर **विकृतिः** । यथा—

इमे सोमाः सुरामाण.(१) छागैर्न मेषैर्ऋषभै. (२) सुताः शष्पैर्न तोक्मभिः (३) लाजैर्महस्वन्तो मदा (४) मासरेण परिष्कृता. (५) शुक्राः पयस्वन्तोऽमृताः (६) प्रस्थिता वो मधुश्चुत (७) स्तानश्विना सरस्वती (८) इन्द्रः सुत्रामा वृत्रहा (९) जुषन्तां सोम्यं मधु (१०) पिबन्तु मदन्तु व्यन्तु होतर्यज ॥ (यजुर्वेदे—अ० २१ म० ४२)

अष्टाशीत्यक्षर**माकृतिः** । यथा—

'भगो अनुप्रयुक्ता (१) मिन्द्रो यातु पुरोगव (२) यस्या सदोहविर्धाने (३) यूपो

---

१ अत्रैकादश गायत्रा. पादा, एको जागत पाद. २. अत्र दश गायत्राः पादा., एको जागत. पादः.

यस्यानुमीयते (४) ब्राह्मणा यस्यामर्चन्ति (५) ऋग्मिः सामा यजुर्विदः (६) शुम्भन्त यस्यामृत्विजम् (७) सोममिन्द्राय पातवे (८) शमो भूतिदक्षिणायां सुश्रेपां (९) मह्ये ददातु सुमनस्यमानो (१०) ॥'

चतुरशीत्यक्षरं प्रकृतिः । यथा—

'सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्राज्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किंचिदुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि ॥

## प्रकृत्या चोपसर्गवर्जितः । ४ । ४ ॥

उपसर्गेण वर्जितः शुद्धः कृतिशब्दः प्रकृत्या सरूपतयावतिष्ठते । तमेतदुक्तं भवति । अशीत्यक्षरं छन्दः 'कृतिः' नाम । यथा—

'सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत ॥

(यजुर्वेदे—पू० अ० १२ म० ४)

## धृत्यष्टिशक्करीजगत्यः । ४ । ५ ॥

कृतेरधस्ताद्धृतिरष्टिः शक्करी जगतीत्येते शब्दाः क्रमेण व्यवस्थापनीयाः ॥

## पृथक्पृथक्पूर्वत एतान्येषाम् । ४ । ६ ॥

एषां धृत्यादीनां पूर्वतः पृथक्पृथगेतान्येव शब्दरूपाणि विन्यसेत् । पृथक्पृथग्ग्रहणं प्रत्येकं पूर्वत्वज्ञापनार्थम् । अन्यथा हि समुदायपूर्वत्वमेषां स्यात् । तेनायमर्थः—धृतिशब्दात् पूर्वं धृतिशब्दः । अष्टिशब्दात्पूर्वमष्टिशब्दः, शक्करीशब्दात्पूर्वं शक्करीशब्दः । जगतीशब्दात् पूर्वं जगतीशब्दः ॥

## द्वितीयं द्वितीयमतितः । ४ । ७ ॥

अत्र द्वितीयं द्वितीयं शब्दरूपमतिशब्दात्परतः प्रयोक्तव्यम् । एवं तस्युत्तरेषां छन्दसामेताः संज्ञाः क्रमेण भवन्ति । तत्र षट्सप्तत्यक्षरमतिधृतिः । यथा—

---

१ अत्राष्टौ गायत्राः पादाः, द्वौ जागतौ २ कात्यायनोक्तः पादनियमो यथा—
पादा अतिजगत्यास्तु त्रयो द्वादशकाः परावष्टकौ (१) शक्करीपादाः सप्तैवाष्टाक्षराः स्मृताः (२) अष्टिदाक्षरपादौ द्वौ कर्तव्यौ षोडशाक्षरौ आगतोऽथाष्टकौ (३) चाष्टिपादाः षोडशकास्त्रयः, अष्टकौ च (४) अत्यष्टिपादौ जागतौ चाष्टकास्त्रयः, आगतश्चाष्टकाश्च (५) अथ धृतिपादौ तु जागतौ पादास्त्रयोऽष्टकाश्चाथ षोडशाक्षर एव चाष्टकश्च (६) अथातिधृतौ द्वौ पादौ जागतौ ततस्त्रयोऽष्टका जागतश्च तथाष्टाक्षरकावपि (७)' इति ३ एषु व्यूहान्न्यूनता परिहार्या

'स हि शर्धो न मारुतं तुविष्वणि (१) रप्नस्वतीषूर्वरास्विष्टनि (२) रार्तनास्विष्टनिः। (३) आदद्धव्यान्याददि (४) र्यज्ञस्य केतुरर्हणा (५)। अध स्मास्य हर्षतो हृषीवतो (६) विश्वे जुषन्त पन्थां (७) नरः शुभे न पन्थाम् (८)॥' (ऋग्वेदे–अ० २ अ० १ व० १३ म० ६)

द्वासप्तत्यक्षरं धृतिः। यथा—

'अवर्मह इन्द्र दादृहि श्रुधी नः (१) शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो (२) घृणान्न भीषाँ अद्रिवः (३) शुष्मिन्तमो हि शुष्मिभि (४) र्वधैरुग्रेभिरीयसे (५)। अपूरुषघ्नो अप्रतीत शूर सत्वभि (६) स्त्रिसप्तैः शूर सत्वभिः (७)॥' (ऋग्वेदे–अ० २ अ० १ व० २२ म० ६)

अष्टषष्ट्यक्षरमत्यष्टिः। यथा—

'अदर्शि गातुरुरवे वरीयसी (१) पन्था ऋतस्य समयंस्त रश्मिभिः (२) चक्षुर्भगस्य रश्मिभिः (३)। द्युक्षं मित्रस्य सादन (४) मर्यम्णो वरुणस्य च (५)। अथा दधाते बृहदुक्थ्यं [१] वय (६) उपस्तुत्यं बृहद्वयः (७)॥' (ऋग्वेदे–अ० २ अ० १ व० २६ म० २)

चतुःषष्ट्यक्षरमष्टिः। यथा—

'त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म (१) स्तृपत्सोममपिबद्विष्णुना सुतं यथावशत् (२)। स ईं ममाद महि कर्म कर्तवे महामुरुं (३) सैनं सश्चद्देवो देवं (४) सत्यमिन्द्रं सत्य इन्दुः (५)॥' (ऋग्वेदे—अ० २ अ० ६ व० २८ म० १)

षष्ट्यक्षरमतिशक्वरी। यथा—

'साकं जातः क्रतुना साकमोजसा ववक्षिथ (१) साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः (२)। दाता राधस्तुवते काम्यं वसु सै (३) नं सश्चद्देवो देवं (४) सत्यमिन्द्रं सत्य इन्दुः (५)॥' (ऋग्वेदे–अ० २ अ० ६ व० २८ म० ३)

षट्पञ्चाशदक्षरा शक्वरी। यथा—

'प्रोष्वस्मै पुरोरथं (१) इन्द्राय शूषमर्चत (२)। अभीके चिदु लोककृत् (३) सङ्गे समत्सु वृत्रहा (४) अस्माकं बोधि चोदिता (५) नभन्तामन्यकेषां (६) ज्याका अधि धन्वसु (७)' (ऋग्वेदे–अ० ८ अ० ७ व० २१ म० १)

द्विपञ्चाशदक्षरमतिजगती। यथा—

'स भ्रातरं वरुणमग्न आ ववृत्स्व (१) देवाँ अच्छा सुमती यज्ञवनसं (२) ज्येष्ठं यज्ञवनसं (३) ऋतावानमादित्यं चर्षणीधृतम् (४) राजानं चर्षणीधृतम् (५)॥' (ऋग्वेदे–अ० ३ अ० ४ व० १२ म० २)

---

१ २. ३ ४ एषु व्यूहान्न्यूनता परिहार्या.

अथ चत्वारिंशदक्षरा जगती । यथा—

इन्द्रं मित्रं वरुणमग्निमूतये (१) मारुतं शर्धो अदितिं हवामहे (२) ।
रथं न दुर्गाद्वसवः सुदानवो (३) विश्वस्मान्नो अंहसो निष्पिपर्तन (४) ॥
(ऋग्वेदे—अ॰ १ अ॰ ७ व २४ म॰ १)

## अत्र लौकिकम् । ४ । ८ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्ते । पूर्वेषां छन्दसां वैदिकत्वमेव । इत प्रभृत्या आर्यादीनां चूलिकापर्यन्तानां लौकिकत्वमेव । समान्यादीनामुत्कृतिपर्यन्तानां वैदिकत्वं लौकिकत्वं च । अत्र वैदिकच्छन्दसां प्रस्तावे प्रसङ्गाद्वेदव्यासादिमुनिपारम्पर्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्यादिदण्डकपर्यन्तं लौकिकच्छन्दोजातमधिक्रियते । तन्मूलत्वात्काव्यस्य । काव्यं च कीर्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थ ॥

## आत्रिष्टुभाश्च यदार्षम् । ४ । ९ ॥

आङभिविधौ । त्रिष्टुबेव त्रिष्टुभम् । स्वार्थे तद्धित । गायत्र्यादित्रिष्टुप्पर्यन्तं यदार्षं छन्दोजातं वैदिके व्याख्यातं लौकिके च तत्तथैव द्रष्टव्यम् । किं तदार्षम् । चतुर्विंशत्यक्षरा गायत्री अष्टाविंशत्यक्षरोष्णिक्, द्वात्रिंशदक्षरानुष्टुप षट्त्रिंशदक्षरा बृहती चत्वारिंशदक्षरा पङ्क्तिः चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । च समुच्चये ॥

## पादश्चतुर्भागः । ४ । १० ॥

चतुर्भागश्चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भाग पादसंज्ञां लभते । गायत्र्या षडक्षरपादः । एवमुष्णिगादिष्वपि द्रष्टव्यम् । समवृत्तविषयमेतत् ॥

## यथावृत्तसमाप्तिर्वा । ४ । ११ ॥

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते तस्य तादृशा एव पादा ग्रहीतव्या । वाशब्दो व्यवस्थितविभाषा । उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात् ।

आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥
आर्याद्युद्गीतिपर्यन्तं गणच्छन्दः समीरितम् ।
वैतालीयादिचूलिकान्तं मात्राच्छन्दः प्रकीर्तितम् ।
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ॥

तत्रादौ तावदार्यालक्षणसिद्ध्यर्थं गणसंज्ञां करोति—

---

१ 'त्रिरष्टि समानी' (पि॰ सू॰ ५।६) इति सूत्रबोधित छन्द २ 'गायत्र्या वसवः (पि॰ सू॰ ३।२) इति यत्तृतीयाध्याये दर्शित तद्वैदिकविषयमात्रं तेन लौकिकच्छन्दसां त्रिपादपदव्यता निषिद्धा यतो लौकिकविषमवृत्तेऽपि लौकिकविषम एव भविष्यति न तु वैदिकोक्त किं तु चतुष्पदत्व तत्राप्यक्षतमेव ज्ञेयम्

## लः समुद्रा गणः । ४ । १२ ॥

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम् । समुद्रा इति चतुःसंख्योपलक्षणार्थम् । चतुर्णां लकाराणां 'गण' इत्येषा संज्ञा विधीयते ॥

## गौ गन्तमध्यादिर्न्लश्च । ४ । १३ ॥

अनेन गणस्य विन्यासभेदं दर्शयति । स हि गणः कदाचिद्गुरुद्वयेन (ऽऽ) भवति, कदाचिदन्तेनैकेन गुरुणा (॥ऽ), कदाचिन्मध्यमेन (।ऽ।), कदाचिदाद्येन (ऽ॥), कदाचिच्चतुर्भिर्लघुभि (॥॥) । पञ्चस्य भेदस्याभावद् विस्पष्टार्थमिदं सूत्रम् । अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद्गकारेण बहुव्रीहि । द्वन्द्वात् परो य श्रूयते लभतेऽसौ प्रत्येकाभिसंबन्धम् । द्वौ गकारौ (ऽऽ) चत्वारो लघवो (॥॥) भवन्ति । स एको (ऽऽ) गण । गकारोऽन्ते यस्य स गन्तो द्वितीयो (॥ऽ) गण । गकारो मध्ये यस्य स गमध्यस्तृतीयो (।ऽ।) गण । गकार आदौ यस्यासौ गादिश्चतुर्थो (ऽ॥) गण । नकारलकारौ मिलितौ चत्वारो लघवो भवन्ति स पञ्चमो (॥॥) गण ॥

एवं गणेषु सिद्धेष्विदानीमार्यालक्षणं करोति—

## स्वरा अर्धं चार्यार्धम् । ४ । १४ ॥

गणग्रहणमनुवर्तते । स्वरा इति सप्तानां सज्ञा । यत्र प्रस्तारे गणा सप्त भवन्ति, अर्धं च गणस्य, तदार्यार्धं निष्पद्यते । द्वितीयमप्यर्धं तादृशमेव । समप्रविभागेऽर्धशब्द । यद्येवमर्धशब्दस्य 'अर्धं नपुंसकम्' (पा० सू० २।२।२) इत्यनेनैकदेशिसमासे सति पूर्वनिपात प्राप्नोति । यथा—अर्धाढकम्, अर्धपलम्, अर्धखारीति । नैष दोष । सत्यपि समप्रविभागत्वे सबन्धमात्रस्यात्र विवक्षितत्वात् । समप्रविभागस्याप्यर्धशब्दस्यैकदेशिसमासव्यभिचारदर्शनात् । यथा—तुलार्धेन गा क्रीणाति ।

---

१ 'पढमं बारहमत्ता बीए अट्ठारहहिं संजुत्ता ।
जह पढमं तह तीअ दहपञ्चविहूसिआ गाहा ॥' इति प्रा० पि० सू० १।४९.
'सव्वाए गाहाए सत्तावण्णाइँ होन्ति मत्ताइं ।
पुव्वद्धम्मि अ तीसा सत्ताईसा परद्धम्मि ॥' इति प्रा० पि० १।५१
'गाथा' इति नामान्तरमार्याया प्राकृतपिङ्गले २. गुरुरूपो द्विमात्र इत्यर्थ ३ इदं सूत्रं श्रीमता भगवता पतञ्जलिना प्रत्याख्यातम् 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयो' (पा० सू० २।४।२६) इति सूत्रे भाष्ये तथा च भाष्यम्—'एकदेशिसमासो नारप्स्यते । कथमर्धपिप्पलीति । समानाधिकरणसमासो भविष्यति । अर्धं च सा पिप्पली चार्धपिप्पलीति । न सिध्यति । परत्वात्षष्ठीसमास प्राप्नोति । अद्य पुनरयमेकदेशसमास आरभ्यमाण षष्ठीसमास बाधते । इष्यते च षष्ठीसमासोऽपि । तद्यथा—अपूपार्धं मया भक्षितम् । ग्रामार्धं मया लब्धमिति । एवं पिप्पल्यर्धमिति भवितव्यम् ।' इति अत एव 'प्रेम्णा शरीरार्धहरां हरस्य' इति कालिदासप्रयोग संगच्छते.

पणार्थकीतसाम्बूलघणाद्वर्वितानना ।
अनभ्यासाद्रसमाला यान्त्येते सारयात्रिका ॥

तथात्रासमप्रविभागत्वेऽप्यधरात्स्यैकदेशिसमासदर्शनाथ ।

अधचन्द्र दधन्मूर्ध्नि पातु च पार्वतीपतिः ।
कालकूटविष हन्तुं संगृहीतमिवामृतम् ॥

तथा च ।

तुल्यार्थं तुल्यसामर्थ्य मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥

अत्राथस्य लक्षणं ब्रुवाण एव ज्ञापयत्याचार्यो यदार्यायामवान्तरपादव्यवस्था नास्ति। तेन 'द्वीपादन्यस्मादपि' इत्यादौ गणत्रयस्यान्ते गुरुत्वं न स्यात् ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । । । । । । ऽ
द्वीपा—दन्य—स्मादपि मध्या—दपि जल—निधेर्दि—शोऽप्य—न्तात् ।
१ २ ३ ४ ५ ६ ७
ऽ ऽ । । । । । । । । । । । । । । । । । । । ऽ ऽ
आनी—य झटिति घटयति विधिरभि—मतमभि—मु—खीभू—त ॥

# अत्रायुङ् न ज् । ४ । १५ ॥

अत्रायाश्छन्दसि अयुग्गण, प्रथमस्तृतीयः पञ्चम सप्तमश्च न जगणो (।ऽ।) मध्य गुरुन कर्तव्य । शेषास्तु कामतो भवन्ति ॥

# षष्ठो ज् । ४ । १६ ॥

अत्रायाश्छन्दसि षष्ठो जगणो ( ।ऽ। ) मध्यगुरुरेव भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
। । । । ऽ ऽ ऽ ऽ । । । ऽ । । । । । । ऽ
सा जय—ति जग—ज्जाया देवी दिवसु—रपतिप्णु—रतिरुचि—रा ।
१ २ ३ ४ ५ ६ ७
ऽ । । ऽ । । ऽ । । ऽ ऽ । ऽ । । ऽ
या ह—स्मते ऽम्ब—रतले कुसम—धीरपा—तमिषु—दि—व ॥

# न्लौ वा । ४ । १७ ॥

षष्ठ ' इत्यनुवर्तते । आर्याया षष्ठो गण (।।।।) सर्वलघुवा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । ऽ
रूपा—न्तरेण देवी तामे—व सौ—मि सपदि किल महि—ष ।

---

१ यदि विधिरभिमतमुखीभूत इत्र २-३-४ एतदर्थानुवादकं प्राकृतपिङ्गलसूत्रम्
सत्तगणा दीहन्ता जो छट्ट णलहु छट्ठणेह णो ।
थिसमे तह गाहे विअ अद्धे अहुर्अ विआणेहु ॥ (१।५०) इति

१ २ ३ ४ ५ ६ ७

ऽ ऽ—ऽ । ।—ऽ । । ऽ । ।—। । ऽ—।—ऽ ऽ— ऽ,

पाद—स्पर्शसु—खादिव मीलित—नयनो—ऽभ—वद्य—स्याः ॥

## न्लौ चेत्पदं द्वितीयादि । ४ । १८ ॥

षष्ठो (।।।।) गण सर्वलघुश्चेद्भवति, तदा द्वितीयाक्षरादारभ्य पदं प्रवर्तते । पूर्वमेवोदाहरणम् ॥

## सप्तमः प्रथमादि । ४ । १९ ॥

षष्ठे गणे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा जाते सप्तमो गण[१] (।।।।) सर्वलघुश्चेद्भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्तते । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ—ऽ । ।— ऽ ऽ । ऽ।—ऽ ऽ—। ऽ ।—। । । ।—ऽ,

ब्रह्म—क्षत्रकु—लीनः समस्त—साम—न्तचक्र—नुतचर—ण ।

१ २ ३ ४ ५ ६ ७

। । । ।—। ऽ ऽ—ऽ ऽ ऽ ऽ ऽ ऽ—। ऽ ।—।—ऽ,

सकलसु—कृतैक—पुञ्ज श्रीमान् मुञ्ज—श्चिरं ज—य—ति ॥

१ २ ३ ४ ५ ६ ७

। । । ।—। ऽ ।—ऽ ऽ ऽ ऽ—। । । ।—। । । ।—। । । ।—ऽ,

जयति भु—वनैक—वीर सीरा—युधतुलि—तविपुल—बलविभ—व ।

१ २ ३ ४ ५ ६ ७

। । । ।—। ऽ ।—। । । ।—ऽ । ।—ऽ ऽ —।— ऽ ऽ— ऽ,

अनवर—तवित्त—वितरण—निर्जित—चम्पा—धि—पो मु—ञ्ज ॥

## अन्त्ये पञ्चमः । ४ । २० ॥

अन्त्ये भवमन्त्यम् । दिगादित्वाद्यत् । अन्त्ये द्वितीयार्धे पञ्चमश्चेद्गण (।।।।) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्तते । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७

। । । ।— ऽ । ।—ऽ ऽ —। । ऽ—। । ऽ—। ऽ ।—ऽ । ।— ऽ,

स जयति—वाक्पति—राज —सकला—र्थिमनो—रथैक—कल्पत—रु ।

१ २ ३ ४ ५ ६ ७

ऽ ऽ—। ऽ ।—ऽ । ।— ऽ ऽ—। । । ।—। ऽ ।— ।—ऽ,

प्रत्य—र्थिभूत—पार्थिव—लक्ष्मी—हठहर—णदुर्ल—लि—त ॥

## षष्ठश्च ल्[२] । ४ । २१ ॥

'अन्त्ये' इत्यनुवर्तते । अन्त्ये द्वितीयेऽर्धे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा षष्ठे गणे प्राप्ते तदपवादो लकारो विधीयते । पूर्वमेवोदाहरणम् ॥

## त्रिषु गणेषु पादः पथ्याद्ये च । ४ । २२ ॥

---

१ 'प्रलीनसामन्त' इति लिखितोदाहरणपुस्तके । २ इदं सूत्रं 'ल समुद्रा गण.' (पि० सू० ४।१२) इत्यस्यापवादभूतम्, तेन द्वितीयार्धे एकेनापि लघुना षष्ठो गणो भवतीति बोध्यम्.

चकारोऽन्त्यदलानुकर्षणार्थः । यस्या आर्याया अन्त्येऽर्धे आद्ये च त्रिषु गणेषु पाद समाप्यते, सा आर्या 'पथ्या' नाम भवति । तद्यथा—

१ २ ३ ४ ५ ६ ७
ऽऽ— ऽ —ऽऽ— ।।—ऽऽ—। । । —
पथ्या—शी व्या—यामी स्त्रीपु जि—तात्मा—नरो न रोगी—स्यात् ।
१ २ ३ ४ ५ ६ ७
।।।।—।।।—ऽऽ—ऽ।।—ऽऽ। ऽऽ—।
यदि पच—सा मन—सा वा—हुमति—नित्य न भुङ्क्ते—न्य ॥

पादग्रहणं यत्युपलक्षणार्थम् ॥

## विपुलान्या । ४ । २३ ॥

यस्य आर्याया अन्त्येऽर्धे, आद्ये वोभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति स आर्या 'विपुला' नाम । सा चाद्यन्तोभयपूर्वकत्वात्त्रिधा भवति । सामान्येन विधानमेतत् । तत्रादिविपुला—

१ २ ३ ४ ५ ६ ७
ऽऽ—ऽऽ ऽऽ—।ऽ।— —।।।।— —ऽ
स्निग्ध—च्छाया ताप—घ्यपेपि—नी किं—चिदवन—ताग्रा—णा ।
१ २ ३ ४ ५ ६ ७
।।।।—ऽऽ—ऽ —।। ऽऽ—।—ऽ —
मुखविपु—ला सौ—भाग्य—लभते स्त्रीसा—ह—माण्ड—न्य ॥

अन्त्यविपुला—

१ २ ३ ४ ५ ६ ७
ऽ —।ऽ। ।।ऽ—ऽ।।— —।ऽ।— —
चित्त हरन्ति हरिणी—दीघर—श का—मिनी क—लाला—पे ।
१ २ ३ ४ ५ ६ ७
ऽऽ—।ऽ।—ऽऽ—।।।।—।।ऽ—।।।।—।—
नीवी—विमोच—नच्या—जकथित—जघना जघनवि—पु—ला ॥

उभयविपुला—

१ २ ३ ४ ५ ६ ७
ऽऽ—।।।।—।। —।ऽ।—ऽऽ—।ऽ।—ऽ।।—ऽ
या स्त्री—कुचकल—शनित—म्बमण्ड—ले जा—यते म—हाविपु—ला ।
१ २ ३ ४ ५ ६ ७
ऽऽ—।ऽ। —।।ऽ—।ऽ।— ।।—।ऽ।—।—।
गम्भी—रनाभि—रविदी—र्घलोच—ना भव—ति सा सु—भ—गा ॥

अत्रोच्यते—पथ्याविपुलालक्षणयोः सहानवस्थानलक्षणो विरोध , तेन मिश्रीभावो नास्ति । य एकांशो विपुलयाभिस्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति, उभयाश्रयत्वाच्च । पथ्यालक्षणस्य विपुलायास्तदंशेनापि प्रवेशो दुर्लभ । ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यमात्रविषयत्वाद्विपुला भवत्येव । पथ्याचपलयोश्च विरोधाभावाद्व्याप्यव्यापकभावो नास्ति । तत्रायं संग्रह —

'एकैव भवति पथ्या तिस्रो विपुलाश्चतस्र एवैता ।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात् ।
साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः ॥'

तेषामनुक्तोदाहरणान्यूह्यानि ॥

**चपला द्वितीयचतुर्थौ ग्मध्ये जौ । ४ । २४ ॥**

अधिकारोऽयम् । द्वितीयचतुर्थौ गणौ मध्यगुरू ( ।ऽ। ) भवतः । प्रथमश्चान्तगुरुः (।।ऽ), तृतीयो द्विगुरुः (ऽऽ), पञ्चमश्चादिगुरुः (ऽ।।) । शेषं यथाप्राप्तम् । एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, सा आर्या 'चपला' नाम । उदाहरणमग्रतः ॥

**पूर्वे मुखपूर्वा । ४ । २५ ॥**

पूर्वेऽर्धे चपलालक्षणं चेद्भवति, तदासौ 'मुखचपला' आर्या । पथ्यापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
। । ऽ—। ऽ ।—ऽ ऽ—। ऽ । ऽ ऽ —। ऽ ।— ऽ । ।— ऽ,
अतिदा—रुणा द्वि—जिह्वा—परस्य रन्ध्रा—नुचारि—णी कुटि—ला[1] ।
१ २ ३ ४ ५ ६ ७
ऽ ऽ— । । । । —ऽ ऽ ऽ ऽ ऽ ऽ —। । । ।—।—ऽ,
दूरा—त्परिहर—णीया नारी नागी—व मुखच—प—ला ॥

आदिविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ ।ऽ।— ऽऽ —। ऽ ।— ऽऽ— ।ऽ।— ऽऽ—ऽ,
[2]यस्या विलोच—ने पि—ङ्गले भ्रु—वौ स—गते मु—खं दी—र्घम् ।
१ २ ३ ४ ५ ६ ७
।।ऽ — ।ऽ। ऽऽ ऽ ऽ —ऽ । । —। । । ।—।—ऽ,
विपुलो—न्नताश्च दन्ता कान्ता—सौ भव—ति मुखच—प—ला ॥

[3]अन्त्यविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
। । ऽ— । ऽ ।—ऽऽ—। ऽ । ऽऽ—। ऽ ।— ऽ ऽ—ऽ,
विपुला—भिजात—वंशो—द्भवापि रूपा—तिरेक—रम्या—पि ।
१ २ ३ ४ ५ ६ ७
ऽ ऽ—। ऽ ।—ऽऽ—। ऽ ।—ऽ।।—। । । ।—।—ऽ,
[4]निर्वा—स्यते गृ—हाद्द—ल्भापि चेद्भव—ति मुखच—प—ला ॥

**जघनपूर्वेतरत्र । ४ । २६ ॥**

द्वितीयेऽर्धे चपलालक्षणं चेद्भवति, सार्या 'जघनचपला' नाम । तत्र पथ्यापूर्वकं जघनचपलोदाहरणम्—

---

१ 'मर्मानुसारिणी' इति लिखितोदाहरणपुस्तके । २. 'यस्याश्च' इत्यपि तत्रैव । ३. 'उभयविपुलापूर्वं' इति क० मु० पुस्तके । ४ 'नि सार्यते' इत्यपि च तत्रैव ।

यस्या—द्दस्य क—निष्ठा—न स्पृश—ति मही—ममामि—का वा—पि ।
सा स—र्वैधूर्त—भोग्या भवेद—वश्य—जघनच—प—ला ॥

अन्त्यविपुलापूर्वक जघनचपलोदाहरणम्—

यस्या—पादा—ङ्गुष्ठ म्मतीत्य याति प्रदेशि—नी दी—र्घा ।
विपुले—कुले प्र—सूता—पि सा ध्रु—व जघ—न—चपला स्यात् ॥

महाविपुलापूर्वक जघनचपलोदाहरणम्—

मकर—ध्वजस—दनि द—श्यते स्फु—ट तिल—कलाञ्छ—न य—स्या ।
विपुला—न्वयप्र—जाता—पि जाय—ते जघ—न—च—पला—सौ ॥

## उभयोर्महाचपला । ४ । २७ ॥

यस्या उभयोरर्धयोश्चपलालक्षण भवति, साया 'महाचपला' नाम । तत्र पथ्यापूर्वक महाचपलोदाहरणम्—

हृदय हरन्ति नार्यो—मुनेर—पि भ्रू—कटाक्ष—विक्षे—पै ।
दोर्मू—लनाभि—देश निदर्श—यन्त्यो महाच—प—ला ॥

विपुलापूर्वक महाचपलोदाहरणम्—

विपुले कपोल—देशे—पि कुपि—का द—श्यसे स्मि—ते य—स्या ।
विपुला—न्वयप्र—जाता—पि जाय—ते सा महाच—प—ला ॥

## आद्यर्धसमा गीति । ४ । २८ ॥

आद्यर्धेन सममन्त्यमर्धं यस्याः साद्यर्धसमा 'गीति' नाम । अन्त्यपदलोपी समासः । एतदुक्तं भवति—द्वितीयेऽप्यर्धे षष्ठो गणो (।ऽ।) जकारो न्लौ (।।।।) वा कर्तव्यः ॥

तत्र पथ्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
। । ऽ ऽ ऽ — । । ऽ ऽ । । — । । ऽ — । ऽ । — ऽ ऽ — ऽ,
मधुरं वीणा—रणितं पञ्चम—सुभग—श्च कोकि—लाला—पः ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ ऽ । । — ऽ ऽ ऽ ऽ । । ऽ — । ऽ । — ऽ । । — ऽ,
गीति पौरव—धूना सुप्तं कुसुमा—युधं प्र—बोधय—ति ॥

आदिविपुलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
। । । । — ऽ । । — ऽ ऽ — । ऽ । — ऽ ऽ — । ऽ । — । ऽ ऽ — ऽ,
इयमप—रा विपु—ला गी—तिरुच्य—ते स—र्वलोक—हितहे—तोः ।

१ २ ३ ४ ५ ६ ७
। । ऽ — । ऽ । — ऽ ऽ — । ऽ । । । ऽ — । ऽ । — ऽ ऽ — ऽ,
यदनि—ष्टमात्म—नस्त—त्परेषु भवता—पि मा क्व—चित्का—रि ॥

पथ्यामहाचपलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ । — ऽ ऽ — । ऽ । — ऽ ऽ — । ऽ । — । । ऽ — ऽ,
कामं चकास्ति—गीति—र्मृगीदृ—शां सी—धुपान—चपला—नाम् ।

१ २ ३ ४ ५ ६ ७
। । ऽ — । ऽ । — ऽ ऽ । ऽ । — ऽ ऽ — । । । । — । । ऽ — ऽ,
सुरत—च मुक्त—लज्जं निरर्ग—लोल्ला—पमणित—रमणी—यम् ॥

महाविपुलामहाचपलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ — । ऽ । — ऽ ऽ — । ऽ । — ऽ ऽ — । । । । — । । । । — ऽ,
पञ्चे—षुवल्ल—भ प—ञ्चमप्व—निस्त—त्र भवति—यदि विपु—ल ।

१ २ ३ ४ ५ ६ ७
। । ऽ — । ऽ । ऽ ऽ — । ऽ । — ऽ ऽ — । ऽ । — ऽ ऽ — ऽ,
चपलं—करोति कामा—कुलं म—न का—मिनाम—सौ गी—ति ॥

## अन्त्येनोपगीतिः । ४ । २९ ॥

'मा' इत्यनुवर्तते । अन्त्येनार्धेन सममाद्यमर्धं यस्याः, सार्या 'उपगीति' नाम ।

तत्र पथ्योपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ — ऽ । । — ऽ । । — ऽ ऽ — ऽ ऽ — । ऽ । — । — ऽ,
गान्ध—र्वं मक—रध्वज—देव—स्यास्त्रं जगद्वि—ज—यि ।

१ २ ३ ४ ५ ६ ७
। । । । — ऽ । । — ऽ । । — । । ऽ — ऽ ऽ — । — ऽ ऽ — ऽ,
इति सम—वेक्ष्य मु—मुक्षुभि—रुपगी—तिस्त्य—ज्य—ते दे—शः ॥

पथ्यामहाचपलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ ऽ—। ऽ ।—ऽ ऽ—। ऽ ।—ऽ ऽ—।—। । ऽ— ऽ,

उद्गी—तिरत्र नित्यं—प्रवर्त—ते का—म—चपला—नाम् ।

१ २ ३ ४ ५ ६ ७

ऽ ऽ—। ऽ ।—ऽ ऽ । ऽ ।—ऽ ऽ । ऽ ।—ऽ ऽ—ऽ,

तस्मा—न्मुने वि—मुञ्च प्रदेश—मेतं समेत—मेता—भि ॥

महाविपुलामहाचपलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

। । ऽ । ऽ ।—ऽ ऽ—। ऽ ।—ऽ ऽ—। ऽ ।—।—ऽ,

विपुला पयोध—रश्रो—णिमण्ड—ले च—क्षुषोश्च—प—ला ।

१ २ ३ ४ ५ ६ ७

ऽ ऽ—। ऽ ।—ऽ ऽ—। ऽ । ऽ ऽ—। ऽ ।—ऽ । ।—ऽ,

उद्गी—तिशालि—नी का—मिनी च सा वा—णिनी म—नो हर—ति ॥

## अर्धे वसुगण आर्यागीतिः । ४ । ३१ ॥

अष्ट गणा प्रथमेऽर्धे यस्या भवन्ति सा 'आर्यागीति.' नामार्या । अष्टमोऽपि गणश्चतुमत्रिको भवतीत्यर्थ. । विशेषाभावात् । द्वितीयमप्यर्धं तादृशमेव । अत्रापि षष्ठो गण द्विविकल्प एव न लकार । अर्धे इति वर्तमाने पुनरर्धग्रहणाद्गणग्रहणाच्च । इयम् पथ्यादिलक्षणपूर्वकत्वात् तद्वदार्यागीतिः ॥ पथ्यार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

। । । ।—। । । ।—ऽ ऽ ऽ ऽ—ऽ ऽ—। ऽ ।—ऽ ऽ—। । ऽ,

अजमज—रममर—मेकं प्रत्य—क्चैत—न्यमीश्व—रं ब्र—ह्म परम् ।

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ—ऽ ऽ—। । ऽ । । ऽ—ऽ ऽ—। ऽ ।—ऽ ऽ—ऽ ऽ,

आत्मा—नं भा—वयतो भवमु—क्ति स्या—दितीय—मार्या—गीतिः[2]

महाविपुलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

। । ऽ—। ऽ ।—। । ऽ—। ऽ ।—ऽ । ।—। । । ।—। । । ।—। । ऽ

विषयै—भिलाष—मृगतृ—ष्णिका ध्रु—वं हर—ति हरिण—मिव हत—हृदयम्[3][4]

१ २ ३ ४ ५ ६ ७ ८

। । ऽ—। ऽ ।—। । ऽ—। । ऽ—ऽ ऽ—। ऽ ।—। । । ।—ऽ ऽ,

विपुला—त्ममोक्ष—सुखका—ङ्क्षिभिस्त—तस्त्य—ज्यते वि—षयरस—सङ्ग ॥

पथ्याजघनचपलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ—। ऽ ।—ऽ ऽ—। । ऽ ऽ ऽ—। । । ।—। । ऽ—। । ऽ,

वाता—हतोर्मि—माला—चपलं संप्रे—क्ष्य विषय—सुखम—ल्पतरम् ।

---

१ 'मालिनी' इति लि० पु० २. 'आर्याणामासमन्ताद्गीति . ३. 'विपुलाभिलाष इति लि० पु० ४ 'हन्ति' इति लि० पु०.

१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ | ऽ | — ऽ | ऽ | — ऽ ऽ — | ऽ | — — | |
मुक्त्वा समस्त—सङ्ग तपोव—नान्या—श्रयति तेना—रमविद ॥

महाविपुलामहाचपलायागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
| | — | ऽ | — — | ऽ | — | ऽ | | | | | — | |
चपला—नि चक्षु—रादी—नि चित्त—हारी च हन्त हतविप—मगण ।

१ २ ३ ४ ५ ६ ७ ८
ऽ ऽ — | ऽ | — — | ऽ | — | | — | | | — | | —
एका—न्तशीलि—नां यो—गिनाम— सो मम—ति परम—सुखसं—प्राप्ति ॥

इत्यार्याधिकारः ।

## वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्गौ । ४ । ३२ ॥

'ल' इत्यनुवर्तते । यत्रायुक्पादे प्रथमे तृतीये च द्विःस्वरार्थतुदश लकारा भवन्ति युक्पादे च द्वितीये चतुर्थे च युग्वसवः षोडश लकाराः, तद् 'वैतालीय' नाम छन्दः । तेषां लां मध्ये उभयोरपि पादयोरन्ते रेफलकारगकारा कर्तव्या । आद्ये पादे षड् लकारा पश्चादवशिष्यन्ते । द्वितीये चाष्टौ । एवं वैतालीयार्धं सिध्यति । द्वितीयमप्यर्धं तादृशमेव । तत्रोदाहरणम्—

२ ४ ५ ६ ८ ९ ११ १२ १४ २ ४ ६ ७ ८ ९ ११ १२ १४ १६
ऽ— — |—|—ऽ—|— —|— —ऽ— ऽ—|—|— ऽ— | —ऽ—|—ऽ
कु-रङ्गी-व-न-री-र-सं-च-या ग्य-की-भू-त-शि-रो-रिव-प-ञ-रा ।

२ ४ ५ ६ ८ ९ ११ १२ १४ २ ४ ६ ७ ८ ९ ११ १२ १४ १६
ऽ— |—|— —|—ऽ—|—ऽ ऽ—ऽ— —|—|—ऽ |—ऽ—|—ऽ
के-ही प-रु-पै-स्त्र-मा-र-यो वै-ता-ली-य-त-नु पि-त-न्व-ते ॥

अपि च ।

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ९ ११ १२ १४ १६
|—|—ऽ— | |— —|— —|— |—|—ऽ—ऽ |—|— —|— ऽ—|—ऽ
स-च-त-न्वि क-टा-क्ष-वी-क्षि-त प्र-स-र-द्भि ध-व-ला-न्त-लो-च-नैः ।

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ ९ ११ १२ १४ १६
|—|—ऽ—|—| ऽ—|—ऽ—|—ऽ |—|—ऽ ऽ—|—| ऽ—|—ऽ |—ऽ
वि-धि-खै-रि-व ती-क्ष्ण-को-टि भि प्र-ह-त प्रा-णि-ति दु-ष्क-रं गे-त ॥

यथा च ।

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ ९ ११ १२ १४ १६
|—|— —|—|— —|—ऽ—|—ऽ |—|—ऽ—ऽ—|—|—ऽ—|—ऽ—|—ऽ
श-च-सी-णि-स-प-र्य-रा-थि-त पु-रु-पा-न्य-म-धि-तो-र्ध्व-मू-र्द्ध-जम् ।

---

१ 'मयमर्थं—यत्रायुक्षि' इति लि॰ पु॰  २ चतुर्दशसंख्याका' इति लि॰ पु॰
३ 'द्विर्भसव' इति लि॰ पु॰  ४ तेषां लां मध्ये' इति लि॰ पु॰  ५ 'द्वयोरपि' इति लि॰ पु॰  ६ 'द्वितीयमपि वैतालीयं' इति लि॰ पु॰  ७ अत्र' इति लि॰ पु
८ 'सिरोऽस्मि' लि पु॰ ९ 'नर' इति लि॰ पु॰ १० 'पङ्क्चर्चितं' इति लि॰ पु

१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ४ ६ ७ ८ १० ११ १३ १४ १६
।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ–।–ऽ,
व–पु–रो–न्त–र–व–ह्वि–दी–पि–तं वै–ता–ली–य–मि–दं वि–लो–क्य–ताम् ॥

वैतालीयमिति वेतालशब्दात्कृशाश्वा(पा० सू० ४।२।८०)देराकृतिगणत्वाच्छण्प्रत्ययश्चातुरर्थिक । अत्र पादग्रहणमिदं ज्ञापयति, यदार्यादीना 'पादश्चतुर्भाग.' (पि० सू० ४।१० ) इति व्यवस्था नास्ति ॥

## गौपच्छन्दसकम् । ४ । ३३ ॥

अस्मिन् वैतालीये छन्दस्यन्ते गकारश्चेदधिको भवति, तद् 'औपच्छन्दसकं' नाम छन्द. । तत्रोदाहरणम्—

२ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८
ऽ–ऽ–।–।–ऽ ।–ऽ–। ऽ–ऽ ऽ ऽ–ऽ–।–।–ऽ–।–ऽ–। ऽ–ऽ,
वा–क्यै–र्म–धु–रै प्र–ता–र्य पू–र्वं य प–श्चा–द–भि–स–द–धा–ति मि–त्रम् ।
२ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८
ऽ–ऽ–।–।–ऽ ।–ऽ–।–ऽ–ऽ–ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ–। ऽ–ऽ,
तं दु–ष्ट–म–तिं वि–शि–ष्ट–गो–ष्ठ्या–मौ–प–च्छ–न्द–स–कं व–द–न्ति वा–ह्यम् ॥

अपि च ।

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १६ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८
।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ–ऽ ।–।–ऽ–ऽ–।–।–ऽ–।–ऽ–।–ऽ–ऽ,
प–र–म–र्म–नि–री–क्ष–णा–नु–र–क्तं स्व-य-म-ल-न्त -नि-गू-ढ-चि-त्त –वृ त्तिम् ।
१ २ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १७ १८
।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ–ऽ–ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ–। ऽ–ऽ,
अ–न–व–स्थि–त–म–र्थ–लु–ब्ध–मा–रा–दौ-प-च्छ-न्द-स-कं ज–ही–हि मि–त्रम् ॥

उपच्छन्द शब्दादरीहणादि(पा० सू० ४।२।८०)पाठाच्चातुरर्थिको वुञ्प्रत्यय. ॥

## आपातलिका भ्गौ ग् । ४ । ३४ ॥

रेफलकारगकाराणामपवाद ।'द्वि.स्वरा अयुक्पादे युग्वसवोऽन्ते'(पि. सू. ४।३२) इत्यनुवर्तते । पूर्वलक्षणयोरन्ते भकारो गकारद्वयं–च भवत , तद्वैतालीयम् 'आपातलिका' नाम लभते । तत्रोदाहरणम्—

२ ३ ४ ६ ८ ९ १० १२ १४ २ ४ ६ ७ ८ १० ११ १२ १४ १६
ऽ–।–।–ऽ–ऽ ।–।–ऽ–ऽ ऽ–ऽ–ऽ ।–।–ऽ–।–।–ऽ–ऽ,
पि–ङ्ग–ल–के–शी क–पि–ला–क्षी वा–चा–टा वि–क–टो–न्न–त–द–न्ती ।
२ ४ ५ ६ ८ ९ १० १२ १४ १ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६
ऽ–ऽ–।–।–ऽ ।–।–ऽ–ऽ ।–।–।–।–ऽ–। । ऽ–।–।–ऽ–ऽ,
आ–पा–त–लि–का पु–न–रे–षा नृ–प–ति–कु–ले–ऽपि न भा–ग्य–मु–पै–ति ॥

आपातलिका अस्थिरेत्यर्थ ॥

१. 'रातप' इति लि० पु०. २. 'आर्यादीनाम्' इति लि. पु ३ 'तस्मिन्नेव' इति लि. पु. ४. 'गकारौ' इति लि. पु. ५. 'आपातलिका भवेत्' इति लि. पु.

## शेषे परेण युङ् न साकम् । ४ । ३५ ॥

अत्र वैतालीयाधिकारे यथा लकाराणां नियम उक्तस्तद्व्यतिरिक्तो लकारयण शेषस्तस्मिन्नियमः क्रियते—युग्लकारः परेण सार्कं न मिश्रीकर्तव्यः । द्वितीयस्तृतीयेन, चतुर्थे पञ्चमेन युग्मपादे षष्ठश्च सप्तमेन । एवं सदसा शेषाणां मिश्रीभावोऽप्यनुज्ञात[१]। अत्रोदाहरणं पूर्वमेव ॥

## षट् चामिश्रा युजि । ४ । ३६ ॥

अत्र द्वितीयचतुर्थयोः पादयोः षट् लकारा अमिश्रा न कर्तव्याः । पृथग् न प्रयोक्तव्या इत्यर्थः । प्रथमतृतीययोश्च पादयोः स्वरुचि[२] । तत्रोदाहरणं वैतालीये तावत्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १ २ ३ ४ ६ ७ ८ ९ १० ११ १२ १३ १४
।–।–।–।–।–। ऽ–।– ।– ।–।–।– ।–ऽ– ।–।– –।– –।–ऽ
स–म–र–शि–र सि स–ह–से द्वि–षां न–य–नि–शि–ता–सु–ध–नु–ष्टि–र–म–त ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १ २ ४ ६ ७ ८ ९ १० ११ १२ १३ १४
।–।–।–।–।–।–ऽ–।–ऽ–।–ऽ ।–।– – । ।– –।– –।–ऽ
कु–च–छ–य–द–ल–वी–य–च–क्षु–षां प्र–म–दा–नां म क–टा–क्ष–वी–क्षि–तैम्[३]॥

औपच्छन्दसकोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १६ २ ४ ६ ७ ८ ९ १० ११ १२ १३ १४ १८
।–।–।–।–।–। ऽ–।– –।–ऽ– –ऽ –।–।– ।–ऽ ।–ऽ–
प–र–यु–व–ति–षु पु–त्र–भा–व–भा–वी इ–त्था प्रा–यै–य–ते त–त[४] प ति–त्वम् ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १६ २ ४ ६ ७ ८ ९ १० ११ १२ १३ १४ १८
।–।–।–।–।–।–ऽ–।–ऽ ।–ऽ– –ऽ–ऽ–ऽ–।–।– –।– –। ऽ–ऽ
इ–द–म–प–र–मि–ष्टो–ध्य–से सि–षे–पा–दौ–प–च्छ–न्द–स कं ल–क्ष्–स पू तम् ॥

आपातलिकोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १ १२ १३ २ ३ ४ ६ ७ ८ ९ ११ १२ १३ १६
।–।– ।–।–।–। ऽ–।–।–ऽ–ऽ ऽ–।–।–ऽ ।–।–ऽ–।–।–ऽ–ऽ
अ–मि–र–म–य–ति किं–न–र–क–ण्ठी हं–स–ग–ति ध–न–ष्पा–य–स–ने–त्रा ।
१ २ ३ ४ ५ ६ ७ ८ ९ १ १२ १३ १ २ ३ ४ ६ ७ ८ ९ ११ १२ १३ १६
।–।–।–।–।–।–ऽ–।– ।–ऽ–ऽ ।–।–।–।– –।–।–ऽ ।–।–ऽ–ऽ
सि–ध–य–क–म–ल–को–म–ल–गा–त्री यु–व–ति–रि–य ह–द–य त–रु–णा–नाम् ॥

## पञ्चमेन पूर्वः सार्कं प्राच्यवृत्तिः[५] । ४ । ३७ ॥

इदानीं विशेषलक्षणमाह— शेषे परेण युङ् न साकम्' (पि सू ४।३५) इत्यत्र पञ्चमचतुर्थयोरेकीभावो निषिद्ध सोऽनेन विधीयते । 'युजि' इत्यनुवर्तते । यदा युक्पादे

१ 'व्यतिरेको' इति लि पु　२ 'तत्र' इति लि पु　३ 'पूर्वोक्तमेव' इति लि पु
४ 'न पृथक्' इति लि पु　५. 'कटाक्षवीक्षितै' इति लि पु　६ 'वैतालीयप्राच्यवृत्ति, औपच्छन्दसकप्राच्यवृत्ति, आपातलिकाप्राच्यवृत्ति' इति भेदत्रयमुपलभ्यते छन्दःकौस्तुभादौ

पञ्चमेन लकारेण पूर्वः संगच्छते तदा 'प्राच्यवृत्ति.' नाम वैतालीयं भवति । शेषं यथा-प्राप्तम् । तत्रोदाहरणम्—

१ २ ४ ५ ६ ८ ९ ११ १२ १४. २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
।–।– ऽ–।–।–ऽ– ।–ऽ– ।–ऽ ऽ–। ऽ–। । ।–ऽ–।–ऽ–।–ऽ,
वि–पु–ला–र्थ–सु–वा–च–का–क्ष–रा. क–स्य ना–म न ह–रन्ति मा–न–सम् ।
१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ ऽ–।–ऽ–।– ।–।– ऽ–।–ऽ–।–ऽ,
र–स–भा–व–वि–शे–ष–पे–श–ला. प्रा–च्य–वृ–त्ति–क–वि–का–व्य–सं–प–द ॥

## अयुक्तृतीयेनोदीच्यवृत्तिः । ४ । ३८ ॥

'पूर्वः साकम्' इत्यनुवर्तते । अयुक्पादे तृतीयेन लकारेण यदि पूर्वः संगच्छते तदा 'उदीच्यवृत्ति' नाम वैतालीयम् । शेषं यथाप्राप्तमेव । तत्रोदाहरणम्—

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० १२ १३ १४ १६
।–ऽ–।–।–।–ऽ–।– ऽ–।–ऽ ।–।–ऽ–ऽ । ।–ऽ–ऽ–।–।–ऽ,
अ–वा–च–क–म–नू–र्जि–ता–क्ष–रं श्रु–ति–दु–ष्टं य–ति–क–ष्ट–म–क्र–मम् ।
१ ३ ४ ५ ६ ८ ९ ११ १२,१४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
।–ऽ–।–।–।–ऽ । ऽ–।–ऽ ।–।– ऽ– ऽ–।–।–ऽ–।–ऽ–।–ऽ,
प्र–सा–द–र–हि–तं च ने–ष्य–ते क–वि–भि का–व्य–मु–दी–च्य–वृ–त्ति–भि ॥

## आभ्यां युगपत्प्रवृत्तकम् । ४ । ३९ ॥

आभ्यां पूर्वोक्तलक्षणाभ्या युगपत्प्रवृत्ताभ्या 'प्रवृत्तकं' नाम वैतालीयम् । युक्पादे पञ्चमेन पूर्वः संगच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थः । तत्रोदाहरणम्—

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
।–ऽ ।–।–। ऽ– ।–ऽ–।–ऽ ऽ–।–ऽ ।–।–।–ऽ–।–ऽ–।–ऽ,
इ–दं भ–र–त–वं–श–भू–भृ–तां श्रू–य–ता श्रु–ति–म–नो–र–सा–य–नम् ।
१ ३ ४ ५ ६ ८ ९ ११ १२.१४. २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
।–ऽ–।–।–।–ऽ ।–ऽ–।–ऽ ऽ–।–ऽ–।–।–।–ऽ ।–ऽ–।–ऽ,
प–वि–त्र–म–धि–कं शु–भो–द–यं व्या–स–व–क्त्र–क–थि–तं प्र–वृ–त्त–कम् ॥

## अयुक्चारुहासिनी । ४ । ४० ॥

यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तद्वैतालीयं 'चारुहासिनी' नाम । किं तल्लक्षणं चतुर्दशमात्रत्वं तृतीयेन पूर्वस्य योग । तत्रोदाहरणम्—

१ ३ ४ ५ ६ ७ ८ ११ १२ १४ १ ३ ४ ५ ६ ८ ९ ११ १२ १४
।–ऽ– ।–।–।–ऽ–।–ऽ–। ऽ, ।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ
म–ना–क्प्र–सृ–त–द–न्त–दी–धि–ति' स्म–रो–ल्ल–सि–त–ग–ण्ड–म–ण्ड–ला ।

---

१ अस्यापि 'वैतालीयोदीच्यवृत्ति, औपच्छन्दसकोदीच्यवृत्ति, आपातलिकोदीच्यवृत्ति' इति भेदत्रयमुपलभ्यते तत्रैव २. तद् उदीच्यवृत्तिः' इति लि. पु. ३. 'वैतालीयप्रवृत्तम्, औपच्छन्दसकप्रवृत्तम्, आपातलिकाप्रवृत्तकम्' एवं त्रिविधं छन्द कौस्तुभादौ. ४. तथैव चारुहासिन्यपि त्रिविधा.

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४　१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
। — ऽ — । — । — । — ऽ　।　— । — ऽ　। — ऽ　। — । — ।　ऽ — । — ऽ — । — ऽ
क–न्य–क्ष–ल–क्षि–ता तु का–मि–नी म–नो ह–र–ति चा–रु–हा–सि–नी ॥

## युगपरान्तिका । ४ । ४१ ॥

युग्मलक्षणयुक्तेश्चतुर्भिः पादैः 'अपरान्तिका' नाम वैतालीयम् । किं तल्लक्षण षोडशमात्रत्वं पञ्चमेन पूर्वस्य योग षष्ठ्या मिश्राणां प्रयोगश्च । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६　१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। — । — । — ऽ — । — । — । — ऽ — । — ऽ — । — ऽ　। — । — । — ऽ — । — ऽ — ऽ　। — ऽ — । — ऽ
स्थि–र–वि–ला–स–न–व–यौ–व–ना–न्व–ता क–म–ल–को म–लाँ–ङ्गी मृ–गे–क्ष–णा ॥
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६　१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। — । — ।　ऽ — ।　। — । — ऽ　।　ऽ — । — ऽ　। — । — । — । — । — । — ऽ — । — ऽ — । — ऽ
ह–र–ति क–स्य हृ–द–यं न का–मि–न सु–र–त–के लि–कु–श–ला–प–रा न्ति–का ॥

अपरस्यान्तिके समीपे स्थिता । परकीयेत्यर्थः ॥

### इति वैतालीयाधिकारः ।

## गन्ता द्विर्वसवो मात्रासमकं ल् नवमः । ४ । ४२ ॥

वैतालीयम्– (पि॰ सू॰ ४ । ३२) इत्यादिसूत्रात्स्यसम्यन्त 'पाद'ग्रहणमनुवर्तते । 'ल्' इति च महानधिकारः । तेनायमर्थः—यत्र पादे गन्ता सन्तः, षोडश लकारा भवन्ति तत् 'मात्रासमकं' नाम छन्दः । अन्ते द्वाभ्यामेको गुरुः (ऽ) कर्तव्यः । नवमश्च लकारः (।) एव । 'द्विर्वसवः' इति द्विगुणिता वसवः लकाराः षोडशेत्यर्थः । शेषे परेण युङ् न साकम्' (पि॰ सू॰ ४।३५) इत्यनुवर्तनीयम् । तत्रोदाहरणम्—

२ ४ ५ ६　९ १ १२ १३ १६　२ ४ ६ ८ ९ १ १२ १४ १६
ऽ — ऽ — । — । — ऽ　। — । — ऽ — ऽ — ऽ,　ऽ — ऽ — ऽ — ऽ　। — । — ऽ — ऽ — ऽ
अ–म्ल–भु–यु–गो वि–र–लै–र्द–न्तै– गं–म्भी–रा–क्षो नै–स–ना–सा–ग्र ।
२ ४ ५ ६ ८ ९ १ १२ १४ १६　२ ४ ५ ६　९ १ १२ १४ १६
ऽ — ऽ — । — । — ऽ　। — । — ऽ　ऽ — ऽ　ऽ — ऽ — । — । — ऽ　। — । — ऽ　ऽ — ऽ
नि–र्मो–स–हृ–भु स्फु–टि–तै के–शी–र्मा–त्रा–स–म–कं ल–भ–ते दुः–खम् ॥

'गन्त– (पि॰ सू॰ ४ । ३२ ) इत्यनेनैवान्तस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवारणार्थम् । तेनात्र द्वौ लकारौ (।।) भङ्क्त्वा द्विमात्रिको गुरुः (ऽ) किं मत इति वाक्यशेषः ॥

---

१ अपरान्तिकापि त्रिधोपलभ्यते तत्रैव २ 'तद्युग्मलक्षणम्' इ लि पु ३ स्मितविलासरसोक्तिपेशला इति लि पु ४ कोमलमुखी इति लि पु ५ छन्दःकौस्तुभरत्नाकरादिभिन्नेषु नव वैतालीयभेदा उपलभ्यन्ते परं तत्र तेष्वेकतमो 'दक्षिणान्तिका' इतिनामा भेदो नोपलभ्यते इयमप्यपरान्तिका पूर्वभिन्नविधैव तत्रोपलभ्यते ६ 'मात्रासमकं नवमो ल् गोऽन्त्य इति वृ॰ र॰ ७ मितनासाग्र' इति कलिकाता मुद्रितपुस्तके, मतनासाग्र' इति लिखितपुस्तके च ८ अन्त्यस्य' इति लि॰ पु॰

## द्वादशश्च वाँनवासिका । ४ । ४३ ॥

यस्य मात्रासमकस्य पादे द्वादशो लकार (।) स्वरूपेणावतिष्ठते चकारान्नवमश्च तन्मात्रासमकं 'वानवासिका' नाम । तत्रोदाहरणम्—

२ ३ ४ ६ ८ ९ १० ११ १२ १४ १६ १ २ ३ ४ ६ ७ ८ ९ १० ११ १२ १४ १६
ऽ – । – । – ऽ – ऽ – । – । – । – । – ऽ – ऽ, । – । – । – । – ऽ – । – । – । – । – । – ऽ – ऽ,
म–न्म–थ–चा–प–ध्व–नि–र–म–णी–य सु–र–त म-हो-त्स-व-प-ट–ह–नि-ना-द.।
१ २ ४ ६ ८ ९ १० ११ १२ १४ १६ २ ३ ४ ६ ८ ९ १० ११ १२ १४ १६
। – । – ऽ – ऽ – ऽ – । – । – । – । – ऽ – ऽ, ऽ – । । ऽ – ऽ – । – । – । – । ऽ – ऽ,
व–न–वा–स–स्त्री–स्व–नि–त–वि–शे–ष क–स्य न चि–त्तं र–म–य–ति पुं–स ॥

## विश्लोकः पञ्चमाष्टमौ । ४ । ४४ ॥

द्वादशग्रहणं नवमग्रहणं च निवृत्तम् । यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ (।) तिष्ठत., शेषं यथाप्राप्तम्, तन्मात्रासमकं 'विश्लोको' नाम । तत्रोदाहरणम्—

२ ४ ५ ६ ७ ८ १०. १२ १४ १६ २ ३ ४ ५ ६ ७ ८ १० ११ १२ १४ १६
ऽ – ऽ – । – । – । – । – ऽ ऽ – ऽ – ऽ, ऽ – । – । – । – । – । – । – ऽ – । – । – ऽ – ऽ,
आ–त–र्गु–ण–र–हि–तं वि–श्लो–कं दु–र्न–य–क–र–ण–क-द–र्थि–त–लो–कम् ।
२ ४ ५ ६ ७ ८ १० ११ १२ १४ १६ २ ४ ५ ६ ७ ८ १० ११ १२ १४ १६
ऽ – ऽ । – । – । – । – ऽ – । – । – ऽ – ऽ, ऽ – ऽ । – । – । – । ऽ – । – । – ऽ – ऽ,
जा–तं म–हि–त–कु–ले–ऽप्य–वि–नी–तं मि–त्रं प–रि–ह–र सा–धु–वि–गी तम्॥

## चित्रा नवमश्च । ४ । ४५ ॥

यस्य नवमो लकार (।) एवावशिष्यते चकारात्पञ्चमाष्टमौ च, तन्मात्रसमकं 'चित्रा' नाम । तत्रोदाहरणम्—

१ २ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४ ५ ६ ७ ८ ९ १० ११ १२ १४ १६
। – । ऽ – । – । । – । – । – । – ऽ – ऽ – ऽ, ऽ – ऽ । – । – । – । । – । । – ऽ – ऽ – ऽ,
य–दि वा–ञ्छ–सि प–र–प–द–मा–रो–ढुं मै–त्रीं प–रि–ह–र स-ह व–नि-ता भि ।
२ ३ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४. ५ ६.७. ८ ९.१० १२ १४ १६
ऽ – । – । । – । – । – । । – । – ऽ – ऽ – ऽ, ऽ – ऽ । – । – । । । – । – ऽ ऽ – ऽ
मु–ह्य–ति मु–नि–र–पि वि–ष–या–स–ङ्गा–च्चि-त्रा भ-व ति हि म–न–सो वृ-त्तिः ॥

'नवम '(पि०सू०४।४२) इत्यनुवर्तमानेऽपि पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम्।

## परयुक्तेनोपचित्रा । ४ । ४६ ॥

परयुक्तेन दशमेन सहैकीभूतेन नवमेन 'उपचित्रा' नाम भवति । पूर्वं लघुनियमेन लक्षणं प्रोक्तम् । इदं तु गुरुनियमेनोच्यते । तत्रोदाहरणम्—

---

१. 'तद्युगलाद्वानवासिका स्यात्' इति वृ० र०. २. 'जो ल्नावथाम्बुधे विश्लोकः' इति वृ० र०. ३ 'वाणाष्टनवसु यदि लश्चित्रा' इति वृ० र० ('चित्रा नाम च्छन्दश्चित्रं चेत्रयो वा यकरौ' इति च्छन्दोमञ्जर्यादिषूपलब्धं चित्रा चित्रं वा च्छन्दस्त्वन्यत् ) ४. 'उपचित्रा नवमे परयुक्ते' इति वृ० र० ( अर्धसमवृत्तान्तर्गतोपचित्रनामकं छन्दस्त्वितोऽन्यत्. )

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रापादाभ्यां पादाकुलकम् । तत्रोदाहरणम्—

१. २ ३ ४ ६ ७ ८ १०. ११ १२ १४ १६
। – । – । – । – । – । – । – ऽ – । – । – ऽ – ऽ
प–रि–हृ–त–स–र्व–प–रि–ग्र–ह–लो–क

१ २ ३ ४. ६ ७ ८ ९ १० ११ १२ १४ १६
। – । – । – । – ऽ – । – । – । – । – । – ऽ – ऽ,
प्र–ति–दि–न–व–र्धि–त–गु–रु–त–र–शो–कः ।

२. ३. ४ ६ ७ ८ १० ११ १२ १४ १६
ऽ – । – । – ऽ – । – । – ऽ – । – । – ऽ – ऽ,
दुः–ख–वि–व–र्धि–त–लो–च–न–वा–रिः

२ ४ ५ ६ ८ १० ११ १२ १४ १६
ऽ – ऽ – । – । – ऽ ऽ – । । – ऽ – ऽ,
पा–दा–कु–ल–कं या–ति त–वा–रि. ॥

इति मात्रासमकाधिकारः ।

## गीत्यार्या लः । ४ । ४८ ॥

यत्र पादे द्विर्वसव॰ षोडश लकारा भवन्ति सा 'गीत्यार्या' नाम जाति । 'ल' इत्यनुवर्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। – । – । – । – । – । – । – । – । – । – । – । – । – । – । – ।
म–द–क–ल–ख–ग–कु–ल–क–ल–र–व–मु–ख–रि–णि

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। – । – । – । – । – । – । – । – । – । – । – । – । – । – । – ।
वि–क–सि–त–स–र–सि–ज–प–रि–म–ल–सु–र–भि–णि ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११.१२ १३ १४ १५ १६
। – । – । – । – । – । – । – । – । । – । – । । – ।
गि–रि–व–र–प–रि–स–र–स–र–सि म–ह–ति ख–लु

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। – । – । – । – । – । – । – । । – । । – । । – । – । – ।,
र–ति–र–ति–श–य–मि–हृ म–म हृ–दि वि–ल–स–ति ॥

सर्वलघुच्छन्दसि गीत्यार्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम् ॥

---

१. 'द्विगुणितवसुलघुरचलधृतिः' इति नामान्तरं वृ॰ र॰. २. 'चउमत्ता अट्ठगणा पुव्वद्धे, उत्तरद्ध होइ समरूआ । सो खन्धआ विआणहु पिङ्गल पभणेइ मुद्धि बहुसंभेआ ॥' इति प्रा॰ पि॰ सू॰ १।६३ इत्यनुसारेण स्कन्धकमित्यपि सञ्ज्ञान्तर भवेत्.

## शिखा विपर्यस्तार्धा । ४ । ४९ ॥

सैव गीत्यार्या विपर्यस्तार्धा यदा भवति तदा 'शिखा' इत्याख्यां लभते । अयमर्थः—यत्रार्धं सर्वलघु भवति, अर्धं च सर्वगुरु, इति ।

एवं तस्या एव विन्यासभेदेन संज्ञाद्वयमाह—

## लः पूर्वश्चेज्ज्योतिः[1] । ४ । ५० ॥

पूर्वार्धभागे सर्वलघुद्वात्रिंशल्लकारो (३०) भवति, उत्तरार्धे सर्वगुरुः षोडश (१६)-गकारस्तदा 'ज्योतिः' नाम शिखा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५,१६
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
य–दि सु–ख–म–नु–प–म–म–य–र–म–मि–छ–य–सि

१७ १८ १९ २० २१ २२ २३ २४ २५,२६ २७ २८ २९ ३० ३१ ३२
।–।–।–। ।–।–।–। ।–।–।–।–।–।–।–।
प–रि–ह–र यु–व–ति–यु र–ति–म–ति–श–य–मि–ह ।

१ २ ३ ४ ५ ६ ७ ८
ऽ–ऽ–ऽ– –ऽ– – –ऽ
आ–त्म–ज्यो–ति–र्यो–गा–भ्या–सा

९,१ ११ १२ १३ १४ १५,१६
ऽ–ऽ –ऽ–ऽ– ऽ–ऽ
द्द्र–ष्टा दु–ख–च्छे–दं कु–र्या ॥

## गश्चेत्सौम्या । ४ । ५१ ॥

तस्या एव शिखायाः पूर्वार्धभागे सर्वगुरुः षोडश (१६) गकारश्चेद्भवति, उत्तरार्धे द्वात्रिंश (३२) लकारो भवति तदा 'सौम्या' नाम शिखा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
ऽ– ऽ ऽ–ऽ ऽ–ऽ ऽ–
सौ–म्यां दृ–ष्टिं दे–हि प्रे–ह्या

९ १० ११ १२ १३ १४ १५,१६
ऽ–ऽ–ऽ– ऽ ऽ– ऽ–ऽ
दे–हे–ऽस्मा–कं मा–सं सु–स्था ।

---

१ 'मत्त अठाइस पढमे, बीए बत्तीस मत्ताइं । पभ पअ मज्झे लहुआ सुद्धा सिक्खा विहाणेहु ॥' इति प्रा० पि० सू० १।१२७ उक्तशिखाच्छन्दस्त्वन्यत् २ 'मन्दरमहहरसे ससारसरिसिवसम्भवारणवरण । णीसमअणसासइसेहरसरणगअणुसरहुविमहरवीर ॥' इति प्रा० पि० सू० १।६४ इति सूत्रोक्तस्कन्धकभेदान्तर्गतशरभाख्यं छन्दोनामान्तरम्

३ 'अनङ्गक्रीडा' इति नामान्तरमस्य वृ० र०

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।−।−।−।−।−। ।−।−।−।−।−। ।−। ।−।,
श−श−ध−र−मु−खि मु−ख−मु−प−न−य म−म ह−दि
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७.२८ २९ ३० ३१ ३२
।−।−।−।−।−।−।−।−।−।−। ।−।−।−।−।−।
म−न−सि−ज−रु−ज−म−प−ह−र ल−घु−त−र−मि−ह ॥

## चूलीकैकोनत्रिंशदेकत्रिंशदन्ते ग् । ४ । ५२ ॥

'अर्धे' ग्रहणम् (पि० सू० ४।४९) अनुवर्तते । यत्र प्रथमेऽर्धे एकोनत्रिंश(२९)ल्लकारा भवति, द्वितीये चार्धे एकत्रिंशत् (३१), तयोश्चान्ते द्वौ (।।) लकारावुन्मूल्य प्रत्येकमेको गुरुः (ऽ) क्रियते, तत् 'चूलिका' नाम छन्दः । 'अन्ते ग्' इति विशेषोपादानसामर्थ्याद-न्येषा लघुत्वमुक्तं भवति । तेनाद्ये सप्तविंशति (२७)र्लघवः, अन्ते गुरुरेको भवति । द्वितीयेऽप्येकोनत्रिंश (२९) ल्लघवः, अन्ते गुरुश्चैकः । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७, ८, ९ १० ११ १२ १३ १४
।−।−।−।−।−।−।−।−।−। ।−।−।−।,
र−ति−क−र−म−ल−य−म−रु−ति शु−भ−श−श-
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २९
।−।− ।−।−।−।−।−।−।−। ।−।−।−।−ऽ,
म−भि−ह−त−हिं−म−म−ह−सि म−धु−स−म−ये ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
।−।−।−। ।−।−। ।−।−।−। ।−।−।−। ।,
प्र−व−स−सि प−थि−क वि−र−हि−त क−थ−मि−ह तु
१७ १८ १९ २० २१.२२ २३ २४ २५ २६ २७ २८ २९ ३१
।−।−।−।−।−।−।−।−।−।−।−।−।−ऽ,
प−रि−हृ−त−यु−व−ति−र−ति−च−प−ल−त−या ॥

अन्ये पुनरन्यथैवेदं सूत्रमधीयते—'चूलिकार्धमेकोनत्रिंशदन्ते ग्' इति । तेषामु-भयोश्चाप्यर्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२.१३ १४
।−।−।−।−।−।−।−।−।−।−।−।−।−।
घ−न−प−रि−म−ल−मि−ल−द−लि−कु−ल−मु−ख-
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २९
।−।−।−।−।−।−।−।−।−।−।−।−।−।,
रि−त−नि−खि−ल−क−म−ल−म−ल−य−प−व−ने ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
।−।−।−। ।−।−। ।−।−।− । ।−।−।
ज−न−य−ति म−न−सि श−शि−मु−खि मु−द−म-

---

१. **'अतिरुचिरा'** इति सञ्ज्ञान्तरं वृत्तरत्नाकरादिषु.

१५,१६ १७ १८ १९,२ २१ २२,२३ २४ २५,२६ २७ २८
।–।–।–।–। ।–। ।–।–।–। ।–।–ऽ
ति–ष्ठा–य–मि–द म–म म–धु–र–य म–धु–ना ॥
'अथ प्रहणादत्र पादव्यवस्था नास्ति ॥

इदानीं गणमात्राच्छन्दसां गुरुलघुसंख्यापरिज्ञानार्थमिदमाह—

## सा ग् येन न समा लां ग्ल इति । ४ । ५२ ॥

सा गुरुसंख्या वेदितव्या । येन यावद्भिरक्षरैः । लां लघूनां मात्राणाम् । समा समसंख्या ग्लो न स्युः । अपि तु न्यूनसंख्या एव । 'ग्ल' इत्यक्षराण्यभिधीयन्ते तेषां गुरुलघुरूपत्वात् । अयमभिप्रायः—आर्यादिषु यावत्यो मात्रा उपदिष्टा तावन्त्यक्षराणि यथासंख्य न पूर्यन्ते, सा तत्र गुरुसंख्या वेदितव्या । अवशिष्टा लघुसंख्या । तत्रायमुपयोग—यदा कश्चित्पृच्छति, चत्वारिंशदक्षरायामार्यायां कति गुरवः संपद्यन्ते, कति वा लघव इति, तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्यायां मात्रा संख्यायां चत्वारिंशदक्षरसंख्या(४०)मपनीय तत्र येऽवशिष्यन्ते, तान् गुरूनुपदिशेत् । ते च सप्तदशैव(१७) । शेषांस्तु त्रयोविंशति(२३)लघुरूपानुपदिशेत् । तद्यथा—

१ २ ३ ४ ५–६ ७–८ ९–१ ११–१२
।–।–।–।–ऽ – ऽ – ऽ – ऽ
स–ने–यु–ग–म – धु – घा – तं
(१)(२)(३)(४)(५) (६) (७) (८)

१३ १४–१५,१६ १७ १८ १ –२ २१ २२ २३ २४ २५–२६ २७–२८ २९–१
। – ऽ – ।–।–।–ऽ – । ।–।–।–ऽ – ऽ – ऽ
स – मी – प – त – र – व – र्ति द – द – य – शो – का – मैः ।
(९) (१ ) (११) (१२) (१३) (१४) (१५) (१६) (१७) (१ ) (१९) (२ ) (२१)

---

१ 'कदाचित्' इति कलिकातामुद्रितपुस्तके　२ अस्याभिप्राय स्फुटं प्रकाश्यते—पुरोदर्शितायामार्यायां कति गुरवो लघवश्च पतन्त इति पृष्टे सति पूर्वं तावदार्यायां मात्रगणना विधेया तन्मात्रासंख्यापिण्डीभूताङ्काश्च कुत्रचन पत्रादौ संस्थाप्याः पुनस्तस्या एव सर्वेषामक्षराणां गणनां विधाय तदक्षरसंख्यापिण्डीभूताङ्का मात्रासंख्या पिण्डीभूताङ्कानां संमुखे संस्थाप्या　ततो मात्रासंख्यापिण्डीभूताङ्केभ्योऽक्षरसंख्या पिण्डीभूताङ्कानपनयेत्,　तत्र ये यस्माङ्का अवशिष्यन्ते तावत्संख्याकास्तस्यामार्यायां गुरवो भवन्ति　पुनरक्षरसंख्याङ्केभ्य एतदवशिष्टगुरुसंख्याङ्कानपनयेत्, तत्र यावन्तोऽङ्का अवशिष्यन्ते तावन्तो लघवो जायन्ते　अनयैव रीत्या गणमात्राच्छन्दसां गुरुलघुज्ञानं भवति　तद्रीतिर्यथा—

मा० सं० इः अ० सं० इ गु० सं० इः अ० सं० इ गु० सं० इ ल० स० इः
" ५७ – ४० = १७" " ४० – १७ = २३ "

३१. ३२. ३३. ३४. ३५–३६.३७–३८.३९–४० ४१–४२.
। – । – । । – ऽ – ऽ – ऽ – ऽ
च – र – ति वि – मु – क्ता – हा – रं
(२२) (२३) (२४).(२५) (२६). (२७). (२८). (२९).

४३ ४४ ४५. ४६. ४७ ४८ ४९–५०.५१ ५२–५३ ५४–५५ ५६–५७. मात्राङ्काः ।
। – । – । – । । – । – ऽ । – ऽ – ऽ – ऽ
म – त – मि – व भ – व – तो रि – पु – स्त्री –णाम् ॥
(३०) (३१) (३२) (३३).(३४).(३५) (३६) (३७) (३८) (३९). (४०). अक्षराङ्काः ।

इति श्रीभट्टहलायुधविरचितायां पिङ्गलच्छन्दोवृत्तौ चतुर्थोऽध्यायः ।

---

पञ्चमोऽध्यायः ।

## वृत्तम् । ५ । १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तद् 'वृत्तम्' वेदितव्यम् । तेन प्राक्तनं लौकिकं छन्दोजातं 'जातिः' इत्युच्यते । इत उत्तरं च 'वृत्तम्' । तथा चोक्तम्—

'पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा ।'

गायत्र्यादौ छन्दसि वर्तत इति 'वृत्तम्' । तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते । पादेन[1] संयोगात् 'पद्यम्' । यथा[2] आर्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथग्भवत इत्यर्थः । पादेन[3] सयोगाभावात् । तथा चोक्तम्—

'एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थिर[4]तम्' इति ॥

## सममर्धसमं विषमं च । ५ । २ ॥

समसर्वावयवत्वात् 'समम्' । यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् 'समं' वृत्तम् । शेषं च संज्ञानुरूपमेव । तत्रा[5]र्धे समे यस्य तत् 'अर्धसमम्' सर्वावयवेभ्यः । अर्धाभ्यां च विगतं समं यस्य तद् 'विषमम्' । एवं त्रिप्रकारम[6]पि वृत्तजातमुक्तम् ॥

## समं तावत्कृत्वः कृतमर्धसमम् । ५ । ३ ॥

'समम्' इति समवृत्तसंख्योच्यते । तयैव गु[7]णितं 'तावत्कृत्वःकृतम्' उ[8]च्यते । एतदुक्तं भवति—समवृत्तसंख्यागुणिते समवृत्तसंख्या[9]या पिण्डे या संख्या निष्पद्यते तावत्संख्यमर्धसमं वेदितव्यम् । तत्र गायत्रे छन्दसि समवृत्तसंख्या चतुःषष्टि(६४)रष्टमा-

---

१. 'पादयोः सयोगौ तयोर्विरहात्' इति लिखितपुस्तके. २. 'तथा' इति लि. पु. ३. 'पादसंयोगयोरभावात्' इति लि. पु ४. 'स्थिरम्' इति लि. पु. ५. 'तत्रार्धे समे' इति लि. पु. ६. 'अपि' इति लि. पु. नास्ति. ७. 'तावदङ्कगुणितं' इति लि. पु. ८. 'इति' इति लि पु. अधिकम्. ९. 'समवृत्तपिण्डे' इति लि. पु.

ध्यायस्थिरा । तस्यां चतुःषष्टि(६४)सङ्ख्यागुणितायामर्धसमवृत्तसङ्ख्या सम्पद्यते—चत्वारि सहस्राणि, षण्णवतिश्च वृत्तानि । अङ्कतोऽपि (६४×६४)=४०९६ ॥

## विषमं च । ५ । ४ ॥

अर्धसमं तावत्कृत्वाऽऽकृतं 'विषमं' भवति । एतदुक्तं भवति—अर्धसमवृत्तसंख्या (४०९६) अर्धसमवृत्तसङ्ख्यया(४०९६) एव गुणिता विषमवृत्तसङ्ख्या सम्पद्यते—एका कोटिः सप्तषष्टिर्लक्षाणि सप्तसप्ततिसहस्राणि, द्वे शते, षोडशोत्तरे । अङ्कतोऽपि (४०९६×४०९६)=१६७७७२१६ इति ॥

समसमार्धसमोपचितमर्धसमं विषमं च यथाक्रमं समोपचितं समार्धसमाभ्यां चोपचितं वेदितव्यम् ॥

## राश्यूनम् । ५ । ५ ॥

तद् विषमं वृत्तं (१६७७७२१६) अर्धसमं (४०९६) वा राश्यूनम् (१६७७७२१६ −४०९६=१६७७३१२०) कर्तव्यम् । मूलराशि (४०९६) समुदायात् (१६७७७२१६) अपनेतव्य इति । कोटिरेका, सप्तषष्टिर्लक्षाणि, त्रिसप्ततिसहस्राणि, विंशत्युत्तरं शतं शुद्धविषमवृत्तस्य संख्या । अङ्कतः १६७७३१२० । चत्वारि सहस्राणि, द्वात्रिंशच्चेति शुद्धार्धसमसंख्या । (४०९६−६४)=४०३२ उभयत्रापि राश्यूनमिति ॥

## ग्लिति समानी । ५ । ६ ॥

गकार(ऽ)लकारा(।)भ्यां यद्वृत्तं समाप्यते तत् 'समानी' नाम । 'पादस्यानुष्टुब्वक्त्रम्' (पि० सू० ५।९) इत्यत्र सूत्राद् सिंहावलोकितन्यायेनानुष्टुब्ग्रहणमनुवर्तते । तेनाष्टाक्षर पादो यावत्त्रिगकारलकारैः पूर्यते तावतामेव ग्रहणम् । तत्रोदाहरणम्—[६]

ऽ−।−ऽ− । ऽ−।−ऽ−। ऽ−।−ऽ−।−ऽ । ऽ−।
या−च−ते−ऽपि वि−क्र−मे−ण य−स्य−मा−न−तां न या−ति ।

ऽ−। ऽ− ।−ऽ−।−ऽ−। ऽ−। ऽ−।−ऽ ।−ऽ−।
त−स्य च−क्र−मे−ध−र−स्य के−न तु−ल्य−ता क्रि−ये−त ॥

---

१ 'चतुःषष्टिसंख्यायां' इति लि पु　२ 'अर्धसमसंख्या निष्पद्यते' इति लि पु
३ 'अर्धसमराशिर्मूलराशेः' इति लि पु　४ 'शतमेकमिति विषमवृत्तस्य संख्या' इति लि पु　५ 'अङ्कतः' इति लि पु नास्ति　६ अङ्कतोऽपि' इत्यधिकं लि पु　७ 'हारग चर्चंधुरेण दिट्ठमट्ठअक्खरेण । चारहाद्धि मत्त जाण मल्लिआ सुछंदमाण ॥ इति प्रा० पि० सू० २।७१ इत्यनुसारेण मल्लिकाख्यं नामान्तरम्
८ समाप्येत' इति कलिकातामुद्रितपुस्तके

अपि च ।

ऽ ।–ऽ ।–ऽ–।–ऽ–। ऽ–।–ऽ–।–ऽ–।–ऽ–।
ओँ न–मो ज–ना–र्द–ना–य पा–प–स[1]-घ–मो–च–ना–य ।
ऽ–।–ऽ–।–ऽ–।–ऽ–। ऽ–।–ऽ–।–ऽ–।–ऽ–।
दु–ष्ट–दै–त्य–म–र्द–ना–य पु–ण्ड–री–क–लो–च–ना–य ॥

## ल्गिति [2]प्रमाणी । ५ । ७ ॥

लकार(।)गकारा(ऽ)भ्या यद्वृत्तं सम[3]ाप्यते तत् 'प्रमाणी' नाम । 'जरौ ल[4]गौ' इ[5]त्यपरे तत्रोदाहरणम्—

।–ऽ–।–ऽ–।–ऽ–।–ऽ ।–ऽ–।–ऽ ।–ऽ–।–ऽ
स–रो–ज–यो–नि–र–म्ब–रे र–सा–त–ले त–था–च्यु–तः ।
।–ऽ ।–ऽ–।–ऽ–।–ऽ ।–ऽ । ऽ ।–ऽ–।–ऽ
त–व प्र–मा–ण–मी–क्षि–तुं क्ष–मौ न तौ व–भू–व–तु ॥

## वितानमन्यत् । ५ । ८ ॥

आभ्या समानी-प्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो 'वितानं' नाम । त[6]त्रोदाहरणम्—

ऽ–ऽ ।–। ऽ–ऽ ।–। ऽ–ऽ ।–।–ऽ ऽ ।–।
तृ[7]ष्णा त्य–ज ध–र्मं भ–ज पा–पे हृ–द–यं मा कु–रु ।
ऽ–ऽ ।–। ऽ–ऽ–।–। ऽ–ऽ–।–।–ऽ ऽ–।–।
इ–ष्टा य–दि ल–क्ष्मी–स्त–व शि–ष्टा–न–नि–शं सं–श्र[8]–य ॥

द्वितीयं च—

।–।–ऽ ऽ–। ।–ऽ–ऽ ।–।–ऽ–ऽ–।–।–ऽ–ऽ
हृ[9]–द–यं य–स्य वि–शा–लं ग–ग–ना–भो–ग–स–मा–नम् ।
।–।–ऽ–ऽ ।–।–ऽ–ऽ ।–।–ऽ–ऽ–। ।–ऽ–ऽ
ल–भ–ते–ऽसौ म–णि–चि–त्रं नृ–प–ति–र्मू–र्ध्नि वि–ता–नम् ॥

अन्यच्च—

ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ
क[10]ङ्का–ल–मा–ल–भा–रि–णं कं–द–र्प–द–र्प–हा–रि–णम् ।

---

१ 'पापबन्धमोचनाय' इति लिखितपुस्तके. २ 'लहू गुरू णिरन्तरा **पमाणि** अट्ठ अक्खरा ।' इति प्रा० पि० सू० २।६९. 'द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा । तदा निवेदयन्ति ता बुधा **नगस्वरूपिणीम्** ॥' इति श्रुतबोधानुसारेण नगस्वरूपिणीत्यपि नामान्तरम्. ३. 'समाप्येत' इति क. का. मु पु ४. 'नाराचम्' इति कलिकातामुद्रिते. ५ छन्दोमञ्जरीकारा ६. 'अत्र' इति क. का. पुस्तके. ७.–९ प्राकृतपिङ्गलानुसारेणात्र दोहाभेदान्तर्गतकरभच्छन्द ८ 'वाश्रय' इति लि. पुस्तके. १०. '**नाराचकं** तरौ लगौ' इति छन्द कौस्तुभानुसारेणात्र नाराचकं छन्दः.

ऽ— —।—ऽ—।—ऽ—।—ऽ　　— —।—　।—ऽ—।—

सं—सा—र—ध—न्व—मो—च—न　च—न्द्रा—म—हे त्रि—लो—च—नम् ॥

अपि च—

—ऽ　।—ऽ—।　ऽ—।—　ऽ—ऽ—।—　—।—　—।—

सं—स्था स—रा—मि सु—न्द—रं　च—न्द्रो—प—मा—न—मा—न—नम् ।

ऽ—ऽ—।—　—।—ऽ—।—ऽ　ऽ—ऽ—।—ऽ—।—ऽ—।—ऽ

क—द—ल—चा—प—म—गु—र—　भू—षि—भ्र—मो—प—शो—भि—तम् ॥

[ अपि च ]—

ऽ—।—।—　।।—ऽ—ऽ　ऽ—।—।—ऽ—।　।— —

अ—न्य—द—सौ हि वि—ता—न　मे—त—प—टे—न य—द्—च—म् ।

——।—।—ऽ—।　।　—ऽ　ऽ—।　।—ऽ—।—।— ——

चि—त्र—प—दा—पि च भौ गौ　तो—म ग—ता—र्थ—मि—यं—तत् ॥

किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति । अन्यथा 'वितानं भौ गौ' इत्येव ब्रूयात् ॥

## पादस्यानुष्टुब्वक्त्रम् । ५ । ९ ॥

'पादस्य' इत्ययमधिकार आसप्ताध्यायपरिसमाप्तेः । 'अनुष्टुब्वक्त्रम्' इति च प्राक् प्रतिपादेचतुरक्षरपा पदचतुरूर्ध्वात् (र्ध्वम्)' (पि॰ सू॰ ५।२०) अधिकृत वेदितव्यम् ॥

## न प्रथमात्स्नौ । ५ । १० ॥

प्रतिषेधार्थमिदं सूत्रम् । अत्र वक्त्रजातौ पादस्य प्रथमादक्षरादूर्ध्वं सगण-(।।ऽ) नगणौ (।।।) न कर्तव्यौ ॥

## द्वितीयचतुर्थयो रश्च । ५ । ११ ॥

द्वितीयचतुर्थयोश्च पादयो प्रथमादूर्ध्वं रेफौ (ऽ।ऽ) न कर्तव्य इत्युपदेशः ॥

## वान्यत् । ५ । १२ ॥

अन्येषां षण्णां गणानां मध्ये यत्किंचिद् गणान्तरं प्रथमान्तरं कर्तव्यम् ॥

---

१—२ 'चित्रपदा यदि भौ गौ' इति छन्दःकौस्तुभानुसारेणात्र चित्रपदाख्यं छन्द अन्यदपीह' इति खि पु ३ 'चित्रपदात्' इति क का मु पुस्तके 'एव' इति खि पु नास्ति ४ समाप्ते इति क का मु पुस्तके ५. प्रतिपादचतुरक्षरपा' इति क का मु पुस्तके नास्ति ६ 'वर्णात्' इति क का मु पुस्तके ७ 'द्वितीयचतुर्थयोश्च' इति खि पु नास्ति ८ 'रेफोऽपि' इति क का मु पुस्तके ९ कल्पिकावामुद्रिते तु 'सगण (।।ऽ), नगणाभ्या(।।।) मन्यन्मगणा (ऽऽऽ) दित्रिकपट्टमध्ये यत्किंचित्त्रिकान्तरं वा कर्तव्यम् ॥'

## यं चतुर्थात्। ५। १३॥

'य' इति लुप्तविभक्तिको निर्देशः। पादस्य चतुर्थादक्षरादूर्ध्वं यगणः (।ऽऽ) प्रयोक्तव्यः। सर्वेषामुदाहरणानि—

ल० यगणः यगण ल० ल० यगणः यगण गु०
। — । ऽ ऽ — । ऽ ऽ — । — । — । ऽ ऽ — । ऽ · ऽ — ऽ
नं(१)वधारा(४)म्बुसंसि–क्त– व(१)सुधाग(४)न्धिनि श्वा–सम्।

गु० जगण यगण गु० ल० तगणः यगण गु०
ऽ — । ऽ । — । ऽ ऽ — ऽ । — ऽ ऽ । — । ऽ ऽ — ऽ
कि(१)ञ्चिदुन्न(४)तघोणा–ग्रं म(१)ही काम(४)यते व–क्रम्॥

अन्यैरप्युक्तम्—

गु० भगण यगणः ल० ल० मगण यगण गु०
ऽ — ऽ । । — । ऽ ऽ — । । — ऽ ऽ ऽ — । ऽ ऽ — ऽ
नी(१)लोत्पल(४)वनेष्व–द्य च(१)रन्त्यश्वा(४)रुसंरा–वा।

गु० मगणः यगणः गु० ल० मगणः यगण गु०
ऽ — ऽ ऽ ऽ — । ऽ ऽ — ऽ । — ऽ ऽ ऽ — । ऽ ऽ — ऽ
रा(१)मा कौशे(२)यसंवी –ता प्र(१)नृत्यन्ती–च(४) काद–म्बा॥

तथा—

गु० रगणः यगणः गु० गु० भगण यगणः गु०
ऽ — ऽ । ऽ — । ऽ ऽ — ऽ ऽ — ऽ । । — । ऽ ऽ — ऽ
दु(१)र्भाषिते(४)ऽपि सौभा–ग्यं प्रा(१)य प्रकु(४)रुते प्री–तिः।

गु० रगणः यगणः ल० गु० मगणः यगण गु०
ऽ — ऽ । ऽ — । ऽ ऽ — । ऽ — ऽ ऽ ऽ — । ऽ ऽ — ऽ
भा(१)तुर्मनो(४)हरन्त्ये–व दौ(१)र्लालित्यो(४)क्तिभिर्बा–लाः॥

इत्यादि॥

---

१ 'अब्धेर्योऽनुष्टुभि ख्यातम्' इति प्रा० पि० सू० २।३३२. २. 'यकारः' इति क. का. मु. पुस्तके. ३. 'उदाहरणम्' इति क. का पुस्तके. ४. पि० सू० ५।१० सूत्रस्योदाहरणम्. ५. 'वसुधागन्ध' इति लि. पुस्तके. ६. पि० सू० ५।१३ इत्यस्योदाहरणम् १४. 'प्रनृत्यन्तश्च' इति क. मु पुस्तके. ८. पि० सू० ५।१९ इत्यस्योदाहरणम्. 'दुर्भाविते' इति लि. पुस्तके।

## पथ्या युजो ज् । ५ । १४ ॥

'चतुर्थात्' (पि० सू० ५।१२) इति वर्तते । अत्र पक्षे युज (२,४) पादस्य चतुर्था दक्षरादूर्ध्वं जगणः (।ऽ।) प्रयुज्यते, तद्वृत्तं 'पथ्या' नाम । 'य' (।ऽऽ) स्यापवादः । अत्रोदाहरणम्—

गु तगणः यगणः ल गु मगणः जगणः ल

ऽ — ऽ ऽ । — । ऽ ऽ —। ऽ — ऽ ऽ ऽ — । ऽ ।— ।

नि(१)त्य मीति(४)निपण्ण–स्य रा(१)ज्ञो राष्ट्र(४)न सीद–ति ।

ल यगणः यगणः गु गु मगणः जगणः गु

। — । ऽ ऽ — । ऽ ऽ — ऽ ऽ — ऽ ऽ ऽ — । ऽ ।— ऽ

न(१)हि पथ्या(४)शिनः का–ये जा(१)यन्ते व्या(४)धिवेद ना ॥

## विपरीतैकीयम् । ५ । १५ ॥

उक्तलक्षणाद्विपरीता 'पथ्या' भवतीत्येकीयं मतम् अयुक्पादे चतुर्थादक्षरात् परतो जकारः कर्तव्य , युक्पादे य एवावतिष्ठते । अत्रोदाहरणम्—

गु यगण जगणः गु गु मगणः यगणः गु

ऽ — । ऽ ऽ — । ऽ । — ऽ ऽ — ऽ ऽ ऽ — । ऽ ऽ — ऽ

म(१)दिराक्षा(४)नुवर्ति– नी या(१)श्री स्यात्सा(४) गृहे ल–क्ष्मीः ।

गु यगणः जगण गु ल यगण यगण गु

ऽ — । ऽ ऽ — । ऽ । — ऽ । — । ऽ — । ऽ — ऽ

स(१)प्रभुत्वा(४)भिमानि–नी वि(१)परीता(४)परित्या ज्या ॥

## चपलायुजो न् । ५ । १६ ॥

अयुज (१,३) पादस्य यदा चतुर्थादक्षरादूर्ध्वं नकारो (।।।) भवति, युज–(२,४) पादे य (।ऽऽ) एवावतिष्ठते तदा, चपला' नाम सानुष्टुप् । तत्रोदाहरणम्—

गु यगणः नगण गु गु यगणः यगणः गु

ऽ — । ऽ ऽ —। । ।— ऽ ऽ — । ऽ ऽ — । ऽ ऽ — ऽ

श्री(१)यमाणा(४)मदय–ना म(१)कैर्निर्मो(४)चनासा–मा ।

---

१ युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्तितम् इति प्रा पि० सू० २।३।१४ पथ्यायुजो ज ' इति छि पुस्तके. २ जकार' इति क पुस्तके ३ 'ओजयोर्जेन पारिपेखादेव विपरीतादि' इति छन्दःकौस्तुभे ४ कलिकातामुद्रिते तु—'उक्तलक्षणाद्विपरीतलक्षणा एकीयमते 'पथ्या' भवति । यथा— ५ स्थिरा' इति क पुस्तके ६ 'चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः' इति छन्दःकौस्तुभे ७ 'अक्षरात्' इति क पुस्तके नास्ति ८ 'अनुष्टुब्वक्त्रम् इति क पुस्तके ९ यक' इति क पुस्तके, छि पुस्तके च

गु० यगणः नगण गु० ल० यगण यगणः गु०

ऽ — । ऽ ऽ — । । । — ऽ । — । ऽ ऽ — । ऽ ऽ — ऽ

क(१)न्यका वा(४)क्यचप–ला ल(१)भंते धू(४)र्तसौभा–ग्यम् ॥

## विपुला युग्लः सप्तमः । ५ । १७ ॥

अधिकारोऽयम् । 'य चतुर्थात्' (पि० सू० ५।१३) इत्यनेन सर्वत्र यकारे (।ऽऽ) कृते यदा युक्(२,४) पादे सप्तमो वर्णो लघुर्भवति, तदा 'विपुला' नाम सानुष्टुव् ॥

ननु पथ्यालक्षणेऽन्तर्भूतत्वात् पुनरुक्तमेतत् । नैवम्, विपुलावर्गस्येदानीमारभ्यमाणत्वात्तद्विनानुपपत्ते । युक् (२,४) पादे सप्तमेन लघुनावश्यमेव भवितव्यम् । प्रथमतृतीययोश्चैतावता यकारस्यापवादः । तथा च वक्ष्यति—'सर्वत सैतवस्य' (पि० सू० ५।१८) इत्यादिना । पथ्यायां तु यकार (।ऽऽ) एवावतिष्ठते ॥

## सर्वतः सैतवस्य । ५ । १८ ॥

सैतवस्याचार्यस्य मतेन युक्(२,४)पादे अयुक्(१,३) पादे च सप्तमो लकार (।) एवं कर्तव्य· । अत्रोदाहरणम्—

गु० जगण जगणः गु० गु० भगणः जगणः गु०

ऽ — । ऽ । — । ऽ । — ऽ ऽ — ऽ । । — । ऽ । — ऽ

सै(१)तवेन(४)पथार्ण(७)वं ती(१)र्णो दश(४)रथात्म(७)जः ।

गु० मगणः जगणः गु० ल० मगण जगण गु०

ऽ — ऽ । । — । ऽ । — ऽ । — ऽ ऽ ऽ — । ऽ । — ऽ

र(१)क्ष क्षय(४)करीं पु(७)न· प्र(१)तिज्ञा स्वे(४)न बाहु(७)ना ॥

## भ्रौ न्तौ च । ५ । १९ ॥

'सर्वत· सैतवस्य' (पि० सू० ५।१८) इति निवृत्तम् । 'चपलायुजो न्' (पि० सू० ५।१६) इत्येतस्मादयुग्ग्रहणमनुवर्तते । 'विपुला युग्ल. सप्तम·' (पि० सू० ५।१७) इति सर्वमनुवर्तनीयम् । अयुक् (१,३) पादे यदा चतुर्थादक्षरात्परतो यकारं (।ऽऽ) बाधित्वा

---

१ 'भवते' इति क पुस्तके· २. 'यस्या तसप्तमो युग्मे सा **युग्मविपुला**' इति छन्द कौस्तुभे युग्मविपुलेति नामान्तरम्. ३. 'प्राप्ते' इति क. पुस्तके. ४. 'सानुष्टुव्' इति क. पुस्तके नास्ति. ५. 'लक्षणान्तर्भूतत्वात्' इति क पुस्तके. ६. 'वदति' इति लि. पुस्तके: ७ लिखितपुस्तके सूत्रमत्रैतन्नास्ति. ८. 'सैतवस्याखिलेष्वपि' इति छन्द कौस्तुभे. ९. 'एव' इति नास्ति लि. पुस्तके. १०. 'तत्र' इति क. पुस्तके. ११. 'इत्यस्मात्' क. पुस्तके. १२. 'अनुवर्तते' इति क. पुस्तके. १३. 'तदा' इति लि. पुस्तके.

भकार (ऽ।।) रेफ (ऽ।ऽ) नकार (।।।) तकारा (ऽऽ।) विकल्पेन भवन्ति, तदासौ 'विपुला' नाम। तत्र भकारेण विपुलोदाहरणम्—

ल रगण भगण गु   ल मगण जगण गु
।—ऽ।ऽ—ऽ।।—ऽ   ।—ऽऽऽ—।ऽ।—ऽ
इ(१)यं सखे(४)चन्द्रमु(७)खी   स्मि(१)तज्योत्स्ना(४)व मानि(७)नी ।

गु रगण भगण गु   गु जगण जगण गु
ऽ—ऽ।ऽ—ऽ।।—ऽ   ऽ—।ऽ।—।ऽ।—ऽ
इ(१)न्दीवरा(४)क्षी हृद(७)यं   द(१)न्दहीति(४)तथापि(७)मे ॥

'अयुज' (पि० सू० ५।१६) इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्। व्यक्तिपक्षे पुनरेकस्य। एकपक्षे पुनः प्रथमस्य तृतीयस्य वा। तथा च महाकवीनां प्रयोगाः—

ल रगण भगण गु   गु यगण जगण गु
।—ऽ।ऽ—ऽ।।—ऽ   ऽ—।ऽऽ—।ऽ।—ऽ
म(१)टे मटे(४)वैधव(७)णः   च(१)त्वरे च(४)त्वरे थि(७)म ।

गु यगण यगण गु   गु भगण जगण गु
ऽ—।ऽऽ—।ऽऽ—ऽ   ऽ—ऽ।।—।ऽ।—ऽ
प(१)र्वते प(४)र्वते रा(७)म   स(१)र्वत्र म(४)धुसूद(७)न ॥

गु भगण यगण गु   गु यगण जगण गु
ऽ—ऽ।।—।ऽऽ—ऽ   ऽ—।ऽऽ—।ऽ।—ऽ
वे(१)ष स ज(४)गति श्री(७)मान्   द(१)ण्डधारो(४)महाम(७)ति ।

गु रगण भगण गु   गु जगण जगण ल
ऽ—ऽ।ऽ—ऽ।।—ऽ   ऽ—।ऽ।—।ऽ।—।
य(१)स्य प्रसा(४)दाद्भुव(७)न   धा(१)यते प(४)थि सिद्ध(७)ति ॥

ल रगण भगण गु   ल तगण जगण गु
।—ऽ।ऽ—ऽ।।—।   ।—ऽऽ।—।ऽ।—ऽ
उ(१)पस्थितं(४)प्राञ्जलि(७)ना   वि(१)नीतेन(४)गरुत्म(७)ता ।

गु रगण भगण गु   गु तगण जगण गु
ऽ—ऽ।ऽ—ऽ।।—ऽ   ऽ—ऽऽ।—।ऽ।—ऽ
ना(१)रायण(४)स्तौमि स(७)दा   भ(१)क्तानां म(४)मनाप्र(७)नम् ॥

इत्यादि ॥

---

१ 'भेनाऽम्बितो माद्विपुला' इति छन्द कौस्तुभे   २ 'दण्डधारी महीपतिः' । क. पुस्तके.

इदानीं रेफ(ऽ।ऽ)विपुलोदाहरणम्—

गु० रगण रगण गु० ल० भगणः जगण गु०

ऽ—ऽ।ऽ—ऽ।ऽ—ऽ ।—ऽ।।—।ऽ।—ऽ

ल(१)क्ष्मीपतिं(४)लोकना(७)थं र(१)थाङ्गध(४)रमच्यु(७)तम्।

गु० रगण रगण गु० ल० जगणः जगण गु०

ऽ—ऽ।ऽ—ऽ।ऽ—ऽ ।—।ऽ।—।ऽ।—ऽ

य(१)ज्ञेश्वरं(४)शार्ङ्गपा(७)णिं प्र(१)णमामि(४)त्रयीत(७)नुम्॥

व्यक्तिपक्षे प्रथमे[3] पादे—

ल० रगण रगणः गु० गु० मगण जगण गु०

।—ऽ।ऽ—ऽ।ऽ—ऽ ऽ—ऽऽऽ—।ऽ।—ऽ

म(१)हाकविं(४)कालिदा(७)सं व(१)न्दे वाग्दे(४)वतां गु(७)रुम्।

गु० मगण यगण ल० गु० जगण जगणः गु०

ऽ—ऽऽऽ—।ऽऽ—। ऽ—।ऽ।—।ऽ।—ऽ

य(१)ज्ज्ञाने वि(४)श्वमाभा(७)ति द(१)र्पणे प्र(४)तिबिम्ब(७)वत्॥

तृतीये[4] पादे—

गु० जगण सगण गु० गु० तगणः जगणः गु०

ऽ—।ऽऽ—।।ऽ—ऽ ऽ—ऽऽ।—।ऽ।—ऽ

का(१)मिनीभिः(४)सह प्री(७)तिः क(१)स्मै[5] नाम (४)न रोच(७)ते।

ल० यगण रगण ल० गु० जगण जगण गु०

।—।ऽऽ—ऽ।ऽ—। ऽ—।ऽ।—।ऽ।—ऽ

य(१)दि न स्या(४)द्वारिवी(७)चि - च(१)ञ्चलं ह(४)तजीवि(७)तम्॥

इदानीं न[6]कार(।।।)विपुलोदाहरणम्—

गु० रगण नगणः गु० गु० यगणः जगण गु०

ऽ—ऽ।ऽ—।।।—ऽ ।—।ऽऽ—।ऽ।—ऽ

य(१)स्या विभा(४)ति विपु(७)ला म(१)न्मथस्था(४)नपिण्डि(७)का।

गु० यगण नगण गु० गु० तगणः जगणः गु०

ऽ—।ऽऽ—।।।—ऽ ऽ—ऽऽ।—।ऽ।—ऽ

या(१)चतु ष(४)ष्टिचतु(७)रा सा(१)स्त्री स्यान्नृ(४)पवल्ल(७)भा[7]॥

---

१. 'इत्थमन्या रश्चतुर्थात्' इति छ कौ०. २. 'ईश्वरम्' इति क. पुस्तके. ३. 'प्रथमे पादे' इति लिखितपुस्तके नास्ति. 'वाग्देवतागुरुं' इति क. मु पु ४ 'तृतीयपादे' इति लि पुस्तके. ५. 'कस्य' इति लि. पुस्तके ६. 'नोऽम्बुधेश्चेन्नविपुला' इति छन्द कौस्तुभकारः. ७. 'कृतवल्लभा' इति लि. पुस्तके.

तथैव भारवि —

ल रगणः नगणः गु ल तगणः जगणः गु

।—ऽ।ऽ—।।।—ऽ  ।—ऽऽ।—।ऽ।—ऽ

मु(१)मुत्सुने(४)व कप(७)न कि(१)मायुध(४)मिदं त्व(७)या ।

ल रगणः नगणः गु गु नगणः जगणः गु

।—ऽ।ऽ—।।।—ऽ  ऽ—।ऽ।—।ऽ।—ऽ

त(१)पस्विनो(४)हि वस(७)ने² के(१)वलाजि(४)नवल्क(७)ले ॥

व्यक्तिपक्षे कालिदास —

ल मगणः नगणः गु गु* मगणः जगणः गु

।—ऽऽऽ—।।।—ऽ  ऽ—ऽऽऽ—।ऽ।—ऽ

अ(१)नाकृष्ट(४)स्य विष(७)यैर् वि(१)द्यानां पा(४)रदृश्व(७)न ।

गु जगणः जगणः गु गु तगणः जगणः गु

ऽ—।ऽ।—।ऽऽ—ऽ  ऽ—ऽऽ।—।ऽ।—ऽ

त(१)स्य धर्म(४)रतेरा(७)सीद् वृ(१)द्धत्वं ज(४)रसा वि(७)ना ॥

यथा च—

ल जगणः भगणः गु गु तगणः जगणः गु

।—।ऽ।—।ऽऽ—ऽ  ऽ—ऽऽ।—।ऽ।—ऽ

ते(१)न मन्म(४)थतो म(७)मैर् वृ(१)रात्तेष(४)मितारि(७)षि ।

गु मगणः नगणः गु गु जगणः जगणः गु

ऽ—ऽऽऽ—।।।—ऽ  ऽ—।ऽ।—।ऽ।—ऽ

प्र(१)त्यादिश्य(४)न्त इव(७)मे द(१)ष्टकत्य(४)मिव धा(७)राः

इदानीं सकार(ऽऽ।) विपुलोदाहरणम्—

गु मगणः तगणः गु ल भगणः जगणः गु

ऽ—ऽऽऽ—ऽऽ।—ऽ  ।—ऽ।।—।ऽ।—ऽ

व(१)न्दे देवं (४)सोमेश्व(७)रं ज(१)टामुकु(४)टमण्डि(७)तम् ।

गु भगण तगण गु ल नगणः मगणः गु

ऽ—ऽ।।—ऽऽ।—ऽ  ।—ऽ।।—।ऽ।—ऽ

च(१)न्द्रार्धश(४)रं चेन्द्र (७)म -शि(१)खामणि(४)विभूषि(७)तम् ॥

इति जातिपक्षे ।

व्यक्तिपक्षे—

गु रगणः तगणः गु गु जगणः जगणः गु

ऽ—ऽ।ऽ—ऽऽ।—ऽ  ऽ—।ऽ।—।ऽ।—ऽ

व(१)न्दे कविं(४)श्रीमार(७)विं लो(१)कसंत(४)मसच्छि(७)दम् ।

---

१-३-४ नकारविपुलोदाहरणानि २ वसते' इति किरातार्जुनीये ५ शङ्करं स्मरेशाधिधाननम्' इति कि पुस्तके ६ इति जातिपक्षे' इति क पुस्तके नास्ति

ल० मगणः यगणः ल० गु० तगणः जगणः गु०

। — ऽ ऽऽ — ।ऽऽ — ।   ऽ — ऽऽ·। — ।ऽ। — ऽ

दि(१)वा दीपा(४)इवाभा(७)न्ति  य(१)स्याग्रे क(४)वयोऽप(७)रे ॥

तथान्येषामपि प्रयोगैः[1]—

गु० जगणः यगणः गु० गु० यगण जगण गु०

ऽ — ।ऽ। — ।ऽऽ — ऽ   ऽ — ।ऽऽ — ।ऽ। — ऽ

लो(१)कवत्प्र(४)तिपत्त(७)व्यो  लौ(१)किकोऽर्थ (४)परीक्ष(७)कैः ।

गु० भगणः तगणः ल० ल० यगण जगणः गु०

ऽ — ऽ·।। — ऽऽ·। — ।   । — ।ऽऽ — ।ऽ। — ऽ

लो(१)कव्यव(४)हारं प्र(७)ति  स(१)दृशौ वा(४)लपण्डि(७)तौ ॥

इदानीं चकाराकृष्टं मकार[2](ऽऽऽ)विपुलोदाहरणम्—

गु० भगणः मगणः गु० गु० यगणः जगणः गु०

ऽ — ऽ।। — ऽ·ऽऽ — ऽ   ऽ — ।ऽऽ — ।ऽ। — ऽ

स(१)र्वातिरि(४)क्तं लाव(७)ण्यं  वि(१)भ्रती चा(४)रुविभ्र(७)मा ।

गु० रगणः मगणः ल० गु० मगणः जगणः गु०

ऽ — ऽ।ऽ — ऽऽऽ — ।   ऽ — ऽऽऽ — ।ऽ। — ऽ

स्त्री(१)लोकसृ(४)ष्टिस्त्वन्यै(७)व  निः(१)सामान्य(४)स्य वेध(७)सः ॥

व्यक्तिपक्षे श्रीकालिदासः—

ल० रगणः मगणः गु० ल० यगणः जगणः गु०

। — ऽ।·ऽ — ऽ·ऽ·ऽ — ऽ   । — ।ऽऽ — ।ऽ·। — ऽ

म(१)नोभिरा(४)मा· शृण्व(७)न्तौ  र(१)थनेमि(४)स्वनोन्मु(७)खैः ।

गु० यगण यगण गु० ल० मगणः जगणः गु०

ऽ — ।ऽऽ — ।·ऽ ऽ — ऽ   । — ऽ·ऽ·ऽ — ।·ऽ·। — ऽ

ष(१)ड्जसंवा(४)दिनी· के(७)का  द्वि(१)धाभिन्ना·(४)शिखण्डि(७)भिः ॥

ल० रगण मगण गु० गु० तगणः जगण गु०

। — ऽ·।ऽ — ऽ·ऽऽ — ऽ   ऽ — ऽऽ। — ।ऽ। — ऽ

अ(१)थ प्रदो(४)षे दोष(७)ज्ञः  सं(१)वेशाय(४)विशांप(७)तिम् ।

गु० तगणः यगणः गु० ल० यगणः जगण गु०

ऽ — ऽऽ·। — ।ऽऽ — ऽ   । — ।ऽऽ — ।ऽ। — ऽ

सू(१)नुः सूनृ(४)तवाक्स्र(७)ष्टु - र्वि(१)ससर्जो(४)र्जितश्रि(७)यम् ॥

---

१. 'प्रयोगा' इति लि. पुस्तके. २. एते विपुलाभेदाश्छन्दःकौस्तुभादौ नोपलभ्यन्ते.

तृतीयेपादे—

ल रगण नगण गु गु भगण नगण गु
। — ऽ । ऽ — । ऽ — ऽ ऽ — । ऽ — । । — ऽ
अ(१)नुरूप(४)र्तिनी सि(७)द्धि रा(१)जन्विग(४)गयात्म(७)न ।

ल रगण मगण गु गु भगण नगण गु
। — ऽ । ऽ — ऽ ऽ ऽ — ऽ ऽ — । । — । ।
उ(१)पस्थिते(४)य कल्या(७)णी ना(१)म्नि कीर्ति(४)त एव(७)यत् ॥

गु मगण यगण गु गु मगण जगण गु
ऽ — ऽ — । ऽ — ऽ — । ऽ । — ऽ
स्था(१)प्यस्त्यागो(४)ऽपिपदे(७)प्या प (१)थुः प्राग्व(४)त्यासि(७)न ।

ल रगण भगण गु गु भगण जगण गु
। — ऽ । ऽ — ऽ ऽ — — । ऽ । । — ।
अ(१)नन्यजा(४)नेस्तस्या(७)सीत् सैं(१)व जाया(४)हिरण्म(७)यी ॥

सैकारेणा(॥ऽ)पि क्वचिद्विपुला दृश्यते । यथा—

ल रगण नगण गु ल तगण जगण गु
। — ऽ । । — । ऽ — ऽ । — । । । —
जि(१)ते तुं च्च(४) मते स(७)हमी मृ(१)ते चोपि(४)यराङ्ग(७)ना ।

ल यगण सगण गु गु तगण जगण गु
। — । ऽ ऽ — । । — ऽ । । — । ऽ । — ऽ
स(१)गमिष्य(४)सिनि का(७)ये का(१)चिन्ता म(४)रणे र(७)णे ॥

[1]सम्भिमाश्च विपुलाप्रकारा दृश्यन्ते । तथा च मारविणोक्तम्—

ल भगण नगण गु ल यगण जगण गु
। — ऽ ऽ ऽ । । । — ऽ । — । ऽ — । ऽ । — ।
क(१)चित्काले(४)प्रसर(७)ता क(१)चिदाप(४)स विप्र(७)ता ।

ल रगण भगण गु ल मगण सगण गु
। — ऽ । ऽ — ऽ । । — ऽ । — ऽ ऽ । ऽ । — ऽ
छु(१)नेव सा(४)रङ्कु(७)क त्व(१)मा भिन्न(४)द्विपा प(७)र्म ॥

१ 'तृतीये पादे' इति लि पुस्तके अनन्यजानेर्मस्यासीत्' इति लि पुस्तके. अनन्यजानेः सैवासीद् यस्माज्जाया' इति मुद्रिते रघुवंशे २—३ 'मकारेण' इति लि पुस्तके एते विपुलाभेदाश्छन्दःकौस्तुभादौ नोपलभ्यन्ते ४ 'च' इति लि पुस्तके ५ 'मृतेनापि सुराङ्गना' इति लि पुस्तके ६ भेदा इति लि पुस्तके ७ 'कुलम्' इति क पु

इत्यादयो विपुलाविकल्पा संकीर्णाश्च कोटिशः काव्येषु दृश्यन्ते । सर्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः ॥

अत परं विषमवृत्तान्याह—

## प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम् । ५ । २० ॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः । अनुष्टुभः पादादूर्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यद्वृत्तं निष्पद्यते तत् 'पदचतुरूर्ध्वं' नाम । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८.
तस्याः कटाक्षविक्षेपै

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
कम्पिततनुकुटिलैरतिदीर्घैः ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६.
तक्षकदष्ट इवेन्द्रियशून्यक्षतचैतन्य

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०.
पदचतुरूर्ध्वं न चलति पुरुषः पतति सहसैव ॥

अत्र गुरुलघुविभागो नेष्यते ॥

## गावन्त आपीडः । ५ । २१ ॥

गकारौ(ऽऽ) द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां तत् पदचतुरूर्ध्वं 'आपीड'संज्ञकं भवति । अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
। – । – । – । – । – । – ऽ – ऽ
कुसुमितसहकारे

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
। – । – । – । – । – । – । – । – । – । – ऽ – ऽ
हतहिममहिमशुचिशशाङ्के ।

---

१. 'अनुकोटिशः' इति क पुस्तके २ 'चतुर्थ' इति लि. पु नास्ति. ३. एषावतरणिका क पुस्तके नास्ति ४. 'आद्य पादोऽष्टभिर्वर्णैस्ततोऽन्ये चतुरक्षरैः क्रमाद्वृद्धाः । पादा यस्य द्वितीयाद्या षट्पञ्चाशद्वर्णा यत्र तदिह विबुधजनैरुक्तं **पदचतुरूर्ध्वं** नाम वृत्तम् ॥' इति छन्दःकौस्तुभकारः. ५ 'यस्याः' इति लि पुस्तके. ६. 'क्षयिततनु' इति लि. पुस्तके ७. '**आपीड** इदमेवान्त्यौ वर्णौ चेद्गौ' इति छन्दःकौस्तुभकारः ८ 'चतुर्णामपि पादानामन्ते द्वौ गकारौ भवतः' इति लि. पुस्तके. ९. 'आपीडसञ्ज्ञं' इति लि. पुस्तके. १०. 'हित' इति लि. पुस्तके.

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
I—I—I—I—I—I—I—I—I—I—I—I—I—I—S—S
मि क सि त क म ल स र सि म धु स म ये ऽस्मिन्

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—S—S
प्र व स सि प थि क हृ त क म दि म ध ति स व सि प सि ॥

## गावादौ चेत्प्रत्यापीडः । ५ । २२ ॥

गकारौ(SS) द्वावादौ चेद्भवतश्चतुर्णामपि पादानां तदा तत् पदचतुरूर्ध्वं 'प्रत्यापीड'-संज्ञं भवति । अत्रापि पूर्ववच्छेषाणां लघुत्वमेव । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
S— —I—I—I—I—I—I
चि त म म र म य ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
S—S—I—I—I—I—I—I—I—I—I—I
का न्त व न मि द मु प गि रि न दि।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
S—S—I—I—I—I—I—I—I—I—I—I—I—I—I—I
कू ज न्म धु क र के ल र व हृ त ज न धु ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
S—S—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I—I
पुं स्को कि ल मु ख रि त मु र मि कु सु म चि त त रु त ति॥

## प्रत्यापीडो गावादौ च । ५ । २३ ॥

चकारोऽन्त इति समुच्चयार्थः । तस्यैव पदचतुरूर्ध्वस्याऽन्ते आदौ च यदि गकारौ(SS) भवतस्तदा 'प्रत्यापीड' एवं भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
S—S—I—I—I—I—S—S
का न्ता व व न स रो ध

---

१ अयं भेदश्छन्दःकौस्तुभ-वृत्तरत्नाकरादिषु नोपलभ्यते　२ 'द्वौ पादादौ' इति क्वि पुस्तके　३—४ अपि' इति क्वि पुस्तके नास्ति　५. कुल्कलरवकृतयति इति क्वि पुस्तके　६ अयं भेदश्छन्दःकौस्तुभ—वृत्तरत्नाकरादिषु नोपलभ्यते　७ 'तदापि' इति क्वि पुस्तके　८ एव' इति क्वि पुस्तके नास्ति　९ तस्य' इति क्वि पुस्तके

१ २ ३ ४ ५ ६ ७ ८ ९ १०, ११ १२
ऽ—ऽ—।—।—।—।—।—।—।—।—ऽ—ऽ
हृ द्यं घ न सु र भि म धु र सा ढ्यम् ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
ऽ—ऽ—।—।—।—।—।—।—।—।—।—।—।—।—ऽ—ऽ
पा तुं र ह सि स त त म भि ल प ति म नो मे
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०,
ऽ—ऽ—।—।—।—।—।—।—।—।—।—।—।—।—।—।—।—।—ऽ— ऽ
किं चि न्मु कु लि त न य न म ति तं र म णि त र म णी यम् ॥

तदेवं द्विप्रकार प्रत्यापीडो भवति ॥

## प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधाराः[३] । ५ । २४ ॥

आपीडग्रहणं निवृत्तम् । तेनैव समं लध्वक्षराभ्यनुज्ञानं च । तदेव [४]पदचतुरूर्ध्वं [५]प्रथमस्य विपर्यासे मञ्जरी-लवली-अमृतधाराभिधानं भवति । प्रथमस्य पादस्य [६]द्वितीयेन विपर्यासे 'मञ्जरी' । प्रथमस्य तृतीयेन विपर्यासे 'लवली' । प्रथमस्य चतुर्थेन विपर्यासे 'अमृतधारा' ॥

तत्र मञ्जर्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
ज न य ति म ह तीं प्री तिं हृ द ये
१ २ ३ ४ ५ ६ ७ ८
का मि ना चू त म ञ्ज री ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२, १३ १४ १५, १६,
मि ल द लि च क्र च ञ्चु प रि चु म्बि त के स रा
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६, १७ १८ १९, २०,
को म ल म ल य वा त प रि न र्ति त त रु शि ख रैं[७] स्थि ता ॥

लवल्युदाहरणम्—

१, २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४, १५ १६,
वि र ह वि धु र हू ण का ङ्ग ना क पो लो प मं
१ २ ३, ४ ५, ६ ७ ८ ९, १० ११, १२
[८]प रि ण ति ध र पी त पा ण्डु च्छ वि ।

---

१. 'अविरत' इति क पुस्तके. २. 'कलिका' इति नामान्तर छन्द कौस्तुभवृत्तरत्नाकरादौ ३. 'अथादिना । क्रमात्पादेन चेत्पादा द्वितीयाद्यास्त्रयस्तदा । कलिका लवली प्रोक्तामृतधारा च सूरिभि ॥' इति छन्द कौस्तुभकार . ४. 'तत्पदचतुरूर्ध्वं' इति लि. पुस्तके ५. 'प्रथमस्य–भवति' इति लि पुस्तके नास्ति. ६. 'प्रथमस्य द्वितीयस्य' इति लि पुस्तके ७. 'शिरसि' इति लि पुस्तके. ८. 'कपोलावदातपरिणति अल्पपीतपाण्डुच्छवि' इति लि पुस्तके.

१ २ ३ ४ ५ ६ ७ ८
ठ प सी फ ल नि दा घे

१ २ ३ ४ ५ ६ ७ ८ ९ १ ११ १२ १३ १४ १५ १६ १७ १८ १९
मे य ति ज ग ति हि म क र धी त ल म ति सा द्गु ण द रम्॥

अमृतधारोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ ९ १ ११ १२ १३ १४ १५ १६ १७ १८ १९
प रि पा ल्य सि क र्ण र सा य मं स त त म गृ त धा रा भि

१ २ ३ ४ ५ ६ ७ ८ ९ १ ११ १२
य दि ह दि या प र मा न न्द र सम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १ ११ १२ १३ १४ १५ १६
चे त ग्र ग्रु ध र णी ध र धा नी म गृ त म मी

१ २ ३ ४ ५ ६ ७ ८
त रक्ष ण्य गु ण भू ष णम्॥

केचिदापीडादिष्वपि पादविपर्यासे सति मञ्जर्यादिनामानीच्छन्ति ॥

इति पदचतुरूर्ध्वाधिकारः।

## उद्गतामेकतः सजौ सलौ, नसौ जुगौ, भनौ जलौ ग्, सजौ सजौ ग्।५।२५॥

'पाद-' (पि॰सू॰५।९) इति प्रकृतमनुवर्तते। यत्र प्रथमे पादे सकार(IIS)जकार(ISI)सकार(IIS)ल(I)कारैर्दशाक्षराणि भवन्ति, द्वितीये पादे नकार(III)सकार(IIS)-जकार(ISI)ग(S)कारैर्दश एव तृतीये पादे भकार(SII)नकार(III)जकार(ISI)लकार(I)-ग(S)कारैरेकादश एव चतुर्थे पादे सकार(IIS)जकार(ISI)सकार(IIS)जकार(ISI)ग(S)कारैस्त्रयोदश एवं, तद्वृत्तम् 'उद्गता' नाम। तत्रोदाहरणम्—

सगण जगण सगण ल
I I S — I S I — I I S I
मृ—ग—लो—च—ना श—शि—मु—खी च
(१)-(२)-(३)-(४)-(५)-(६)-(७)-(८) (९)-(१०)

---

१ 'जयति हिमकरोत्तम खण्डचरस्मादु तृष्णाम(द)रं सुन्दरम्' इति लि पुस्तके
२ 'यदि' इति लि पुस्तके ३ 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे। यद्यथ भनजलगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥, 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे। यद्यथ च भनभगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥ इति प्रा॰ पि॰ सू॰ २।१२४, १२२ एव च प्राकृतपिङ्गले लक्षणद्वयमुपलब्धमुद्गतायाः
४ 'एव' इति लि पुस्तके नास्ति

नगण सगणः जगणः गु०
। । ।—। । S । S ।—S
रु–चि–र–द–श–ना नि–त–म्बि–नी ।
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)

भगण नगण जगण ल० गु०
S । ।—। । ।—। S ।—।—S
हं–स–ल—लि–त–ग—म–ना ल—ल–ना
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

सगण जगण सगणः जगण गु०
। । S—। S ।—। । S—। S ।—S
प–रि–णी—य–ते य—दि भ–वे—त्कु–लो–द्ग—ता ॥
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११) (१२) (१३)

यत्र सूत्रे गकारो(S) लकारो(।) वा श्रूयते, तत्र तेनैव वृत्तस्य पाद परिसमाप्यते 'उद्गताम्' इति कर्मविभक्तिश्रवणात् पठेदित्यध्याहार्यम् । 'एकत' इति प्रथमं पाद द्वितीयेन सहाविलम्बेन पठेदित्यर्थ । 'उपस्थितप्रचुपितं पृथगाद्यम्'(पि०सू०५।२८) इत्यतः ।सिंहावलोकितन्यायेन 'आद्य'ग्रहणमनुवर्तनीयम् । तेनाद्यमेव पादमेकत पठेत् । 'एकत.' इति ल्यब्लोपे पञ्चमी ॥

## तृतीयस्य सौरभकं र्नौ भ्गौ । ५ । २६ ॥

'तृतीयस्य' इति ग्रहणात्तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते । तृतीयपादे तु विशेष । तृतीये पादे रेफ(S।S)नकार(।।।)भकार(S।।)ग(S)कारैर्दशाक्षराणि भवन्ति तत् 'सौरभकं' नाम । तत्रोदाहरणम्—

सगण जगण सगण ल० नगण सगण जगण गु०
। । S—। S । । । S—। । । । । । । S—। S ।—S
वि–नि–वा–रि–तोऽपि न–य–ने– न त–द–पि कि–मि–द्दा–ग–तो भ–वान् ।
(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)

रगण नगण भगण गु० सगण जगण सगण जगण गु०
S । S—। । । S । । S । । S—। S ।—। । S—। S ।—S
ए–त–दे–व त–व सौ–र–भ–कं य–दु–दी–रि–ता–र्थ–म–पि ना–व–बु–ध्य–ते ।
(१)(२)(३)(४)(५)(६)(७) (८)(९)(१०) (१) (२) ( ) (४) (५) (६) (७) (८)(९)(१०)(११)(१२)(१३)

---

१ 'त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥' इति प्रा० पि० सू० २।३२७. २. 'एव' इति लि पुस्तके नास्ति ३ 'उद्गताया यदा तृतीयपादे रगणनगणभगण [।], इत्येते भवन्ति तदा 'सौरभकं' नाम' इति लि. पुस्तके.

## ललितं नौ सौ । ५ । २७ ॥

तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ(।।। ।।।)सौ(।।ऽ ।।ऽ) भवतस्तदा 'ललितं' नाम वृत्तम् । तत्रोदाहरणम्—

सगणः जगणः सगणः ल
। । ऽ । ।— । । —।
स–र–स प्रि–य–व–द–म—नू—नै
(१)(२)(३)(४)(५)(६)(७)(८) (९) (१०)

नगण सगण जगण गु
। । ।— । । ऽ । ऽ ।—
म–म–स—ह–द–यं गु–णो–त–रं ।
(१)(२)(३) (४)(५)(६)(७)(८)(९)(१०)

नगण नगण नगण सगण
। । ।— । । ।— । । ऽ— । ।
सु–ल–लि–त–म–ति–क–म–नी–य–त–नु
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

सगण जगण सगण जगण गु
। । । । । । ऽ— । ।—
पु–रु–ष र–त्–न्ति न तु मा–नु मो–पि–त ॥
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

## उपस्थितप्रचुपितं पृथगाद्य म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ । ५ । २८ ॥

यत्र प्रथमे पादे मकार(ऽऽऽ)सकार(।।ऽ)जकार(।ऽ।)भकारा(ऽ।।) गकारौ (ऽऽ) च भवत, द्वितीये पादे सकार(।।ऽ)नकार(।।।)जकार(।ऽ।)रेफा(ऽ।ऽ) गकार(ऽ)श्च, तृतीये नकारौ(।।। ।।।)सकार(।।ऽ)श्च, चतुर्थे त्रयो नकारा(।।। ।।। ।।।) जकार(।ऽ।)यकारौ(।ऽऽ) च तत् 'उपस्थितप्रचुपितं' नाम वृत्तं भवति । तत्रोदाहरणम्—

---

१ नयुग सकारयुगलं च भवति चरणे तृतीयके । तदुदीरितमुद्गतविभि ललितं यदि शेषमस्य सकलं यथोद्गता ॥' इति प्रा० पि० सू० २।२२९
२ तस्यैवोद्गतातृतीयपादस्य स्थाने यदा नौ सौ भवतस्तदा ललितं नाम छन्द' इति लि पुस्तके ३ 'उदारं' इति लि पुस्तके ४ 'गुणोन्नतं' इति लि पुस्तके
५. म्सौ ज्भौ गौ प्रथमाङ्घ्रिरीर्यते खलु यस्मिन्निति च सनजरगास्तथा भनौ स । अथ ननननयुत जय प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ इति छन्दःकौस्तुभकार
६ यत्र प्रथमे पादे मगणसगणजगणभगण [ा] गकारौ च भवत, द्वितीये पादे सगणनगणजगण[र] गण [ा] न (ग)कारश्च तृतीये नगणौ सगणश्च, चतुर्थे त्रयो नगणा जगणयगणौ च तदुपस्थितप्रचुपितं नाम वृत्तं भवति' इति लि पुस्तके
७ 'पादे' इति क पुस्तके नास्ति

मगण सगणः जगणः भगणः गु० गु०

ऽ ऽ ऽ — । । ऽ — । ऽ । — ऽ । । — ऽ — ऽ

रा–मा का—म–क–रे—णु–का मृ—गा–य– त—ने—त्रा

(१) (२) (३) (४)(५)(६) (७)(८) (९) (१०)(११)(१२) (१३) (१४)

सगण नगणः जगणः रगण गु०

। । ऽ । । । । ऽ । — ऽ । ऽ — ऽ

हृ–द–यं ह–र–ति प–यो–ध—रा– व– न—म्रा ।

(१)(२)(३) (४)(५)(६) (७) (८) (९) (१०)(११)(१२)(१३)

नगण नगण सगणः

। । । — । । । — । । ऽ

इ–य–म—ति–श–य—सु–भ–गा

(१)(२)(३) (४) (५) (६) (७) (८) (९)

नगणः नगण नगण जगण यगण

। । । — । । । — । । । — । ऽ । — । ऽ ऽ

व–हु–वि—ध–नि–धु—व–न–कु—श–ला ल—लि ता ङ्गी ॥

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)(११)(१२) (१३)(१४)(१५)

'पृथगाद्यम्' इति उद्गतामेकत पठेत्' (पि० सू० ५।२५) इत्यनुवृत्तिनिरासार्थम्[1] । अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात् ॥

## वर्द्धमानं[3] नौ स्नौ[2] न्सौ । ५ । २९ ॥

'तृतीयस्य[4]' (पि० सू० ५।२६) इत्यनुवर्तते । तस्मिन्नुपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ (।।। ।।।)सकार(।।ऽ)नकारौ(।।।)पुनर्[6]नकार(।।।)सकारौ(ऽ।।) च भवतस्तदा 'वर्द्धमान' नाम वृत्तं भवति । तत्रोदाहरणम्—

मगण सगण जगण भगण गु० गु०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ । ऽ ऽ ऽ

विम्वोष्ठी क–ठि–नो—न्न–त–स्त—ना– व– न—ता–ङ्गी

(१)(२)(३) (४)(५) (६) (७) (८) (९) (१०)(११)(१२) (१३)(१४)

सगण नगण जगण रगण गु०

। । ऽ — । । । — । ऽ । — ऽ । ऽ — ऽ

ह–रि–णी—शि–शु–न—य–ना नि—त–म्ब–गु—र्वी ।

(१)(२) (३) (४) (५) (६) (७) (८)(९) (१०)(११)(१२) (१३)

---

१ 'शङ्कानिरासार्थम्' इति लि पुस्तके २ 'स्नौ' इति सूत्रस्थपाठदेहे नकारात्सकारं दूरीकृत्येत्यर्थ ३ 'वर्द्धमानं तृतीयश्चेन्ननसैर्ननसैरिह' इति छन्द कौस्तुभकार . ४. 'तृतीयस्येति वर्तते ।' इति लि पुस्तके ५ लिखितपुस्तके सर्वत्रापि 'नगणौ सगणनगणौ' इत्यादि ६ 'पुन.' इति लि पुस्तके नास्ति.

नगण। नगण। सगण। नगण। नगण। सगण।

। । ।—। । ।—। । ऽ । । ।—। । ।—। । ऽ

म-द-क-ल-क-रि-ग-म-ना प-रि-ण-त-श-शि-व द ना

(१)(२)(३) (४)(५)(६) (७)( ) (९)(१ )(११)(१२) (१३)(१४)(१५)(१६)(१७)(१८)

नगण। नगण। नगण। नगण। यगण।

। । ।—। । । । । । । ।—। ऽ ऽ

ज-न-य-ति म-न म-न-सि मु-द म-दि-रा-क्षी ॥

(१)(२)(३) (४)(५)(६)(७)(८)(९)(१ )(११)(१२) (१३)(१४)(१५)

## शुद्धविराडृषभ तजरा । ५ । ३० ॥

तस्मिन्नेव उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकारे(ऽऽ।)जकार(।ऽ।)-रेफा(ऽ।ऽ) भवन्ति तदा 'शुद्धविराडृषभ' नाम वृत्त भवति । तत्रोदाहरणम्—

मगण। सगण जगण। भगण गु गु

ऽ ऽ ऽ । । ऽ— । ऽ ।— ऽ । ।— ऽ

क-न्ये-य क-न-को-ज्ज्व-ला म-नो-ह-र-दी सि

(१)(२)(३)(४)(५)(६) (७)(८) (९) (१ )(११)(१२)(१३)(१४)

सगण। नगण जगण रगण गु

। । ऽ—। । ।—। ऽ ।— ऽ । ऽ—ऽ

श-शि-नि-र्म-ल-व-द-ना वि-शा-ल-ने-त्रा ।

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१ )(११)(१२)(१३)

तगण। जगण। रगण

ऽ ऽ ।—। ऽ ।—ऽ । ऽ

पी-नो-रु-नि-त-म्ब-शा-लि-नी

(१)(२)(३) (४)(५)(६) (७)( )(९)

नगण नगण। नगण नगण नगण।

। । ।—। । ।—। । ।—। । ।—। । ऽ

सु-ख-य-ति ह-द-य-म-ति-श-य त-रु-णा-नाम् ॥

(१)(२)(३) (४)(५)(६) (७)(८)(९) (१ )(११)(१२)(१३)(१४)(१५)

उपस्थितप्रचुपितादीनामस्मि प्रवेशयितु न शक्य ते संज्ञा', इति नोक्ताः ॥

## अर्द्धे । ५ । ३१ ॥

पूर्वमुक्तावचानि छन्दांस्युक्तानि । इदानीं नियमेनोच्यन्ते । 'अर्द्धे' इत्यधिकारोऽयमाध्यायपरिसमाप्ते । यदित ऊर्ध्वमनुक्रमिष्याम , अर्द्धे एवं तद्वेदितव्यम् ॥

---

१ 'तजरैस्तु शुद्धविराजपभम्' इति छन्द कौस्तुभकार २ 'अस्मिन्नेव' इति कि पुस्तके ३ पादस्य' इति कि पुस्तके नास्ति ४ सगण ज[ग]ण रगणा' इति कि पुस्तके ...

## [1]उपचित्रकं सौ सलौ ग्, भौ भ्गौ ग् । ५ । ३२ ॥

यस्य प्रथमे पादे [2]सकारा(॥ऽ ॥ऽ॥ऽ)स्त्रय, लकार(।)गकारौ(ऽ) च क्रमेण, द्वितीये [3]भकारास्त्रयो(ऽ॥.ऽ॥.ऽ॥) गकारौ(ऽऽ) च भवत, तत् 'उपचित्रकं' नाम वृत्तम् । अर्द्धशब्दस्य समप्रविभागवचनत्वाद्द्वितीयमप्यर्द्धं तादृशमेव । तत्रोदाहरणम्—

सगण सगण सगण ल० गु०
। । ऽ—। । ऽ—। । ऽ—।—ऽ
उ-प-चि—त्र-क-म—त्र वि-रा—ज-ते
(१)(२)(३) (४)(५)(६) (७)(८)(९) (१०)(११)

भगणः भगण भगण· गु० गु०
ऽ । ।—ऽ । ।—ऽ । ।—ऽ ऽ
चू-त-व—नं कु-सु—मै-र्वि-क-स-द्भि ।
(१)(२)(३) (४)(५)(६) (७)(८)(९)(१०)(११)

सगण सगण सगण ल० गु०
। । ऽ—। । ऽ—। । ऽ—।—ऽ
प-र-पु-ष्ट-वि-घु-ष्ट-म-नो-ह-र
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

भगण भगण भगणः गु० गु०
ऽ । ।—ऽ । ।—ऽ । ।—ऽ—ऽ
म-न्म-थ-के-लि-नि-के-त-न-मे-तत् ॥
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

## [4]द्रुतमध्या भौ भ्गौ ग्, नजौ ज्यौ । ५ । ३३ ॥

यस्य प्रथमे पादे त्रयो भकारा (ऽ॥ ऽ॥ ऽ॥) गकारौ(ऽ ऽ) च, द्वितीये नकार(।।।)जकारौ(।ऽ।)जकार(।ऽ।)यकारौ(।ऽऽ) च, तद् 'द्रुतमध्या' नाम वृत्तम् । अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ । तत्रोदाहरणम्—

भगण भगण· भगणः गु० गु०
ऽ । । ऽ । ।—ऽ । ।—ऽ—ऽ
य-द्य-पि शी-घ्र-ग-ति-र्मृ-दु-गा-मी
(१)(२)(३) (४)(५)(६) (७)(८)(९)(१०)(११)

---

१ 'विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम्' इति प्रा० पि० सू० २।३११ । २ 'सगणा' इति लि. पुस्तके ३ 'भगणा' इति लि पुस्तके. ४. 'भत्रयभोजगतं गुरुकौ चेत् युजि च नजौ ज्ययुतौ द्रुतमध्या' इति छन्दःकौस्तुभकारः.

गगणः　जगणः　जगणः　यगणः

। । ।— । ऽ ।— । ऽ ।— । ऽ ऽ

य–हु–ध–न–मा–न–पि हु –ख–मु–पै–ति ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

भगण　भगण　भगण　गु　गु

ऽ । ।— । ।— । ।—

ना–ति–ध–य–त्व–रि–ता न च मृ–द्वी

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

नगण　जगण　जगण　यगण

। । ।— । ।— । ।— । ऽ

मृ–प–ति–ग–ति क–थि–ता द्रु–त–म ध्या ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

## वेगवती सौ स्गौ, भौ भ्गौ ग् । ५ । ३४ ॥

यस्य प्रथमे पादे त्रय सकारा (॥ऽ ॥ऽ ॥ऽ) गकार(ऽ)श्चैक, द्वितीये भकारास्त्रयो (ऽ॥ ऽ॥ ऽ॥) गकारौ(ऽऽ) च भवत तद् वेगवती' नाम वृत्तम् । तत्रोदाहरणम्—

सगण　सगण　सगण　गु

। । —। । —। । ऽ—ऽ

स–म मु–भ न–रा–धि–प से–नां

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)

भगणः　भगणः　भगण　गु　गु

। ।— । ।— । ।—ऽ—

वे–ग–व–तीं स–इ–ते स–म–रे–षु ।

(१)(२)(३)(४)(५)(६)( )( )(९)(१०)(११)

सगणः　सगणः　सगण　गु

। । ऽ—। । ऽ—। । ऽ ऽ

प्र–ल–यो–र्मि–मि वा–मि–मु–खीं तां

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)

भगणः　भगण　भगण　गु　गु

ऽ । ।—ऽ । ।—ऽ । ।—ऽ—ऽ

क स–क–ठ–क्षि–ति–भृ–मि–भ–हे–षु ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

१ विषमे प्रथमाक्षरहीन दोधकवृत्तमेव वेगवती स्यात् इति प्रा० पि० सू० २।३११　२ 'सगणा इति लि पुस्तके　३ 'भगणा' इति लि पुस्तके　४ 'वृत्त भवति' इति लि पुस्तके　५ 'तत्र इति लि पुस्तके नास्ति ।

## [1]भद्रविराट् तजौ गौ, [2]म्सौ ज्गौ ग् । ५ । ३५ ॥

यस्य प्रथमे पादे तकार(SSI)जकारौ(ISI) रेफ(SIS)गकारौ(S) च, द्वितीये मकार-(SSS) सकार (IIS) जकारा (ISI) गकारौ (SS) च, तद् वृत्तं 'भद्रविराट्' नाम । तत्रोदाहरणम्—

तगणः जगण रगण गु०
S S I—I S I—S I S—S
य-त्पा-द-त-ले च-का-स्ति च-क्रं
(१) (२) (३) (४) (५)(६) (७) (८) (९)(१०)

मगण सगण जगण गु० गु०
S S S I I S I S I—S S
ह-स्ते वा कु-लि-शं स-रो-रु-हं वा ।
(१)(२)(३) (४) (५) (६) (७)(८)(९)(१०)(११)

तगण मगण रगण गु०
S S I—I S I—S I S—S
रा-जा ज-ग-दे-क-च-क्र-व-र्ती
(१) (२)(३) (४)(५) (६)(७) (८) (९)(१०)

मगण सगण जगण गु० गु०
S S S—I I S I S I—S S
स्या-च्छं भ-द्र-वि-राट् स-म-श्नु-ते ऽसौ ॥
(१) (२) (३) (४) (५) (६) (७) (८)(९)(१०) (११)

अस्यौपच्छन्दसिकान्त पातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठ ॥

## [3]केतुमती सजौ सगौ, भरौ नगौ ग् । ५ । ३६ ॥

यस्य प्रथमे पादे [4]सकार(IIS)जकारौ(ISI) सकार(IIS)गकारौ(S) च, द्वितीये भकार(SII)रेफ(SIS)नकारा(III) गकारौ(SS) च, तत् 'केतुमती' नाम वृत्तं भवति । [5]तत्रोदाहरणम्—

---

१. 'ओजे तपरौ जरौ गुरुश्चेत् म्सौ ज्गौ ग् **भद्रविराड्** भवेदनोजे' इति छन्दःकौस्तुभकार. २. 'तगणजगणौ रगणगुरू च, द्वितीये मगणसगणजगणा गकारौ च भवतस्तद्वृत्तं 'भद्रविराट् नाम ।' इति लि. पुस्तके क पुस्तके 'वृत्तं' इति नास्ति. ३ 'विषमे सजौ सगुरुयुक्तौ **केतुमती** समे भरनगाद्गः' इति छन्दःकौस्तुभकार. ४. 'सगणजगणौ, सगणगकारौ च, द्वितीये भगणरगणौ नगणो गकारौ च भवतस्तद्वृत्तं—'इति लि. पुस्तके. ५, 'तत्र' इति लि पुस्तके नास्ति.

सगणः जगणः सगणः गु०

I I S—I S I—I I S—S

इ–न्द्र–भू–रि–भू–मि–प–ति–पि–हां

(१)(२)(३)(४)(५)(६)(७)( )(९)(१ )

भगणः रगणः नगणः गु गु

S I I—S I S—I I I—S—S

गु–द–स–इ–स–छ–ध–ज–य–छ–क्ष्मीम् ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१ )(११)

सगणः जगणः सगणः गु

I I S—I S I I I S—S

स–इ–वे न कोऽपि य–सु–धा–यां

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१ )

भगणः रगणः नगणः गु गु

S I I—S I —I I I S—S

के–तु–म–थीं न–रे–न्द्र त–य से–नाम् ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१ )(११)

## आख्यानकी तौ ज्गौ ग्, ज्तौ ज्गौ ग् । ५ । ३७ ॥

यस्य प्रथमे पादे तैकारौ(SSI.SSI) जकारो(ISI) गकारौ(SS) च, द्वितीये जकार (ISI) तकारौ(SSI) जकार(ISI) गकारौ(SS) च, तत् 'आख्यानकी' नाम वृत्तम् । तत्रोदाहरणम्—

तगणः तगणः जगण गु गु

S S I—S S I—I S I—S—S

स–म्रा–ष–श्री–म–ह्र–ष–गी–स–मा–दै-

(१)(२)(३)(४)(५)(६)(७)( )(९)(१ )(११)

जगणः तगण जगणः गु गु

I S I S I—I S I—S—S

जे–न–स्य पि–ते मु–द–मा–द–धा–ति ।

(१)(२)(३)(४)(५)(६)(७)( )(९)(१ )(११)

---

१ 'अख्यानिकी' इति कलिकातामुद्रितपुस्तके पाठः । एव वृत्तावपि तत्र । 'आख्यानकी तौ जगुरू गमोजे जतावथनोजे जगुरू गुरुश्चेत्' इति छन्दःकौस्तुभकारः उपजातिचतुर्दशभेदान्तर्गतप्राकृतपिङ्गलोक्तभद्राख्यदशमभेदरूपत्वात् 'भद्रा' इत्यपरं नाम २ 'तगणौ जगणौ गकारौ च, द्वितीये जगणतगणौ जगणो गकारौ च यस्य तस्य वृत्तम्— इति ख पुस्तके ३ 'तत्र' इति ख पुस्तके नास्ति

तगणः तगण जगणः गु० गु०

ऽ · ऽ ।—। · ऽ · ।—। ऽ ।—ऽ—ऽ

आ–ख्या–न–की च स्म–र–ज–न्म–वा–र्ता-

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

जगणः तगणः जगण गु० गु०

। ऽ · ।—ऽ ऽ · ।—। ऽ ।—ऽ—ऽ

म–हो–त्स–व–स्या–श्र–वं–णे क्व–ण–न्ती ॥

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

आख्यानकी वार्ताहारिकोच्यते ॥

## विपरीताख्यानकी ज्तौ ज्गौ ग्, तौ ज्गौ ग् । ५ । ३८ ॥

यस्य प्रथमे पादे जकार(।ऽ।)तकारौ(ऽऽ।) जकारो(।ऽ।) गकारौ(ऽऽ) च, द्वितीये तकारौ(ऽऽ।.ऽऽ) जकारो(।ऽ।) गकारौ(ऽऽ) च, तद् 'विपरीताख्यानकी' नाम वृत्तम्। तत्रोदाहरणम्—

जगणः तगण जगणः गु० गु०

। · ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

अ–लं त–वा–ली–क–व–चो–भि–रे–भिः

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

तगणः तगण जगणः गु० गु०

ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

स्वा–र्थे प्रि–ये सा–ध–य का–र्य–म–न्यत् ।

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

जगणः तगणः जगणः गु० गु०

। · ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ ऽ

क–थं क–था–वं–र्ण–न–कौ–तु–कं स्या-

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

---

१ 'जन्मपाश' इति क मु पुस्तके. २. 'आश्रवणे' इति क. मु. पु. । 'यात्रामहोत्सवस्य श्रवणे क्वणन्ती' इति लिखितोदाहरणपुस्तके ३ 'विपरीताख्यानिकी इति क. मु पु. 'जतौ जगौ गो विषमे समे तौ जगौ ग एषा **विपरीत**पूर्वा' इति छन्दःकौस्तुभकारः. प्राकृतपिङ्गलोक्तोपजातिचतुर्दशभेदान्तर्गत**हंसी**नामकपञ्चमभेदरूपत्वात्पञ्चमोऽयं भेद उपजातेः, अतो '**हंसी**' इति नामान्तरम्. ४. 'जगणतगणौ जगणौ गकारौ च, द्वितीये तगणौ जगणौ गकारौ च भवतस्तद्वृत्तं—'इति लि. पुस्तके. ५. 'कथाकर्णनकौतुकं स्यात्' इति लि. पुस्तके.

तगण तगण जगण ग गु

ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

दाक्ष्यान–की ये–द्वि–प–री–त–इ–ति

(१)(२)(३) (४) (५) (६) (७)(८)(९)(१०)(११)

एतयोर्थे वक्ष्यमाणोपजात्यन्तगतत्वेऽपि विशेषसंज्ञार्थमद्र्समाधिकारे पाठः ॥

## हरिणप्लुता सौ सलौ ग्, नृभौ भ्रौ । ५ । ३९ ॥

यस्य प्रथमे पादे सकारास्त्रयो (॥ऽ ॥ऽ ॥ऽ) लकार(।)गकारौ(ऽ) च, द्वितीये नकार (।।।)भकारौ(ऽ॥) भकार(ऽ॥)रेफौ(ऽ।ऽ) च, तद् वृत्तं 'हरिणप्लुता' नाम । तत्रोदाहरणम्–

सगणः सगण सगणः ल गु

। । ऽ—। । ऽ—। । ऽ—।—ऽ

स–म मु–प न–रा–धि–प वि–द्वि–षां

(१)(२)(३) (४)(५)(६) (७) (८) (९)(१०)(११)

नगण भगणः भगण रगणः

। । ।—ऽ । ।—ऽ । ।— ऽ । ऽ

भ–य–वि–स–र्जि–त–के–शु–ल–पी–य–साम् ।

(१) (२) (३) (४) (५) (६) (७)(८)(९) (१०)(११)(१२)

सगणः सगणः सगणः ल गु

। । ऽ—। । ऽ—। । ऽ—।—ऽ

र–ण–भू–मि–प–रा–भु–ख–व–र्म–णां

(१)(२) (३) (४) (५) (६) (७) (८)(९) (१०)(११)

नगणः भगणः भगणः रगणः

। । ।—ऽ । ।— ऽ । ।—ऽ । ऽ

भ–व–ति शी–घ्र–ग–ति–ह–रि–ण–प्लु ता ॥

(१)(२)(३) (४) (५) (६) (७) (८)(९)(१०)(११)(१२)

## अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ । ५ । ४० ॥

यस्य प्रथमे पादे नकारौ(।।। ।।।) रेफ(ऽ।ऽ)लकार(।)गकारा(ऽ) च, द्वितीये नकार-

---

१ च' इति लि॰ पुस्तके नास्ति २ अयुजि प्रथमेन विवर्जितो द्रुतविलम्बिततो हरिणप्लुता' इति प्रा॰ पि॰ सू॰ २।३१५. ३ 'त्रय सगणा लकारगकारौ च द्वितीये नगणभगणौ भगणरगणौ च भवतस्तद्वृत्त' इति लि पुस्तके ४ 'तत्र' इति लि पुस्तके नास्ति ५ भयविसर्जितहेतिलपीयसाम्' इति लि पुस्तके ६ अयुजि ननरला गुरुः समे यदपरवक्त्रमिदं नजौ जरौ' इति प्रा॰ पि॰ सू॰ २।३।१८ ७ 'नगणौ रगणलकारौ गकारश्च, द्वितीये नगणजगणौ जगणरगणौ च भवतः' इति लि पुस्तके

(।।।)जकारौ(।ऽ।) जकार(ऽ।ऽ।)रेफौ(ऽ।ऽ) च, तद्वृत्तम् 'अपरवक्त्रं' नाम । तत्रोदाहरणम्—

नगणः नगण रगण ल० गु०

। । ।—। । ।—ऽ । ऽ—ऽ—ऽ

स–कृ–द–पि कृ–प–णे–न च–क्षु–पा

(१) (२)(३) (४) (५) (६) (७)(८) (९) (१०)(११)

नगण जगण जगणः रगण.

। । ।—। ऽ ।—। ऽ ।—ऽ । ऽ

न–र–व–र प–श्य–ति–य–स्त–वा–न–नम् ।

(१)(२)(३)(४)(५) (६) (७) (८) (९)(१०)(११)(१२)

नगणः नगण रगण ल०गु०

।•। ।—। । ।—ऽ । ऽ—।—ऽ

न पु–न–र–प–र–व–क्त्र–मी–क्ष–ते

(१)(२)(३)(४)(५)(६) (७) (८) (९)(१०)(११)

नगण जगण जगण रगण

। । ।—। ऽ ।—। ऽ ।—ऽ । ऽ

स हि सु–खि–तो–ऽर्थि–ज–न–स्त–था–वि–ध. ॥

(१)(२)(३) (४) (५) (६) (७)(८) (९)(१०)(११)(१२)

अस्य वैतालीयान्तर्गतत्त्वेऽपि विशेषसंज्ञार्थमिहोपन्यास. ॥

## पुष्पिताग्रा नौ र्यौ, न्जौ ज्रौ ग् । ५ । ४१ ॥

यस्य प्रथमे पादे नकारौ(।।। ।।।) रेफ(ऽ।ऽ)यकारौ(।ऽऽ)च, द्वितीये नकार(।।।) जकारौ (।ऽ।)जकार(।ऽ।)रेफौ(ऽ।ऽ) गकार(ऽ)श्च, तद्वृत्तं 'पुष्पिताग्रा' नाम । तत्रोदाहरणम्—

नगणः नगण रगण यगण

। । ।—। । ।—ऽ । ऽ—। ऽ ऽ

स–म–सि–त–द–श–ना मृ–गा–य–ता–क्षी,

(१)(२) (३) (४) (५)(६) (७)(८) (९)(१०)(११)(१२)

नगणः जगण जगण रगण गु०

। । ।—। ऽ ।—। ऽ ।—ऽ । ऽ—ऽ

स्मि–त–सु–भ–गा प्रि–य–वा–दि–नी वि–द–ग्धा ।

(१) (२)(३) (४) (५) (६) (७) (८) (९)(१०)(११)(१२)(१३)

---

१ 'तत्र' इति लि पुस्तके नास्ति २ 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा' इति प्रा० पि० सू० २।३०८ ३. 'यस्य प्रथमे नगणौ रगणयगणौ च द्वितीये नगणजगणौ जगणरगणौ गकारश्च भवति तद्वृत्तं–' इति लि. पुस्तके. ४. 'तत्र' इति लि. पु. नास्ति.

नगणः　नगणः　रगणः　यगणः

। । ।—। । । ।—ऽ । । ।—। ऽ—ऽ

अ—प—ह—र—ति नृ—णां म—नां—सि रा—मा

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

नगणः　जगणः　जगणः　रगणः　गु

। । । । ऽ । । ऽ । ऽ । ऽ—ऽ

भ्र—म—र—कु—ला—नि ल—ते—व पु—ष्पि—ता—ग्रा ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

इयमप्यौपच्छन्दसकान्तर्गता विशेषसंज्ञापनार्थमत्रोच्यते ॥

## यवमती र्जौ र्जौ, ज्रौ ज्रौ ग् । ५ । ४२ ॥

यस्य प्रथमे पादे रेफ(ऽ।ऽ)जकारौ(।ऽ।) भूयोऽपि रेफ(ऽ।ऽ)जकारौ(।ऽ।) भवतः, द्वितीये जकार(।ऽ।)रेफौ(ऽ।ऽ) पुनर्जकार(।ऽ।)रेफौ(ऽ।ऽ) गुरु(ऽ)श्च, तद्वृत्त 'यवमती' नाम । अत्र संप्रदायात्पादव्यवस्था । तत्रोदाहरणम्—

रगण　जगण　रगणः　जगणः

ऽ । ऽ । ऽ ।—। । ऽ—। ऽ ।

प—य—क—न्तु—को—म—ले क—रे वि—भा—ति

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

जगणः　रगणः　जगणः　रगणः　गु

। ऽ ।—ऽ । ऽ—। ऽ ।—ऽ । ऽ—ऽ

प्र—श—स्त—म—स्य—ला—ञ्छ—न पै—दे च य—स्याः ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

रगणः　जगणः　रगण　जगणः

ऽ । ऽ—। ऽ ।—ऽ । ऽ—। ऽ ।

सा य—वा—न्विता भ—वे—द—मा—भि—का—म

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

जगणः　रगणः　जगणः　रगणः　गु

। ऽ ।—ऽ । ऽ—। ऽ ।—ऽ । ऽ—ऽ

स—म—स्त—ब—न्धु—पू—जि—ता प्रि—या च प—त्युः ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

---

१ 'इय—'इत्यादि खि पु नास्ति　२ 'पद्मावती' इत्यपि नामान्तरं श्रीकृष्णमते
३ 'रगणजगणौ भूयोऽपि रगणजगणौ भवतः, द्वितीये जगणरगणौ भूयोऽपि जगणरगणौ गकारश्च तद्वृत्त' इति खि पुस्तके　४ 'अत्र' इति खि पु. नास्ति
५ 'तत्र' इति खि पु नास्ति　६ 'तथा च यथा' इति खि पु॰

यवान्विता यवमतीत्यर्थः [1]॥

## शिखैकोनत्रिंदशदेकत्रिंदशदन्ते ग्। ५। ४३॥

[3]यस्य प्रथमे पादे एकोनत्रिंशद्(२९) अक्षराणि, द्वितीये च एकत्रिंशत् (३१), द्वयोरपि (१. २) पादयोरन्ते प्रत्येकं गुरु (ऽ), तद्वृत्तं 'शिखा' नाम। 'अर्धे' (पि० सू० ५।३१) इत्यधिकाराद्वितीयमप्यर्धं तादृशमेव। 'अन्ते ग्' इति नियमार्थमेतत्। अन्ते एव गुरुर्नान्यत्र। तेन अयु[4]क्(१ ३)पादे अष्टाविंशति(२८)रक्षराणि लघूनि, अन्ते गुरु(१) रेक। युक्(२.४)पादे त्रिंश(३०)ल्लघव·,अन्ते गुरु(१)श्च। [5]तत्रोदाहरणम्—

गु० ऽ

[6]अभिमतवकुलकुसुमघनपरिमलमिलदलिमुखरितहरिति मधौ (२९)

गु० ऽ

सहचरमलयपवनरयतरलितसरसिजरजसि [7]शयतरणिवितते। (३१).

गु० ऽ

विकसितविविधकुसुमसुलभसु[8]रभिशरमदननि[9]हतसकलजने (२९).

गु० ऽ

ज्वलयति मम हृदयमविरतमिह सुतनु तव विरहदहनविषमशिखा॥ (३१)

## [10]खञ्जा महत्ययुजीति। ५। ४४॥

---

१. 'यवान्वितेति' इति लि. पु०. २ पिङ्गलसूत्र ( ४।४९ ) प्राकृतपिङ्गलसूत्र-(१।१२६)बोधित'**शिखा**'छन्दस्त्वसाद्भिन्नमेव. ३. 'यस्य प्रथमे पादे एकान्नत्रिंशदन्ते ग् यस्य प्रथमे पादे एकान्नत्रिंशदक्षराणि भवन्ति, द्वितीये च एकत्रिंशद् द्वयोरपि पादयोरन्ते च प्रत्येकं गकारस्तद्वृत्तं शिखानाम' इति लि. पुस्तके. ४ 'तेनायुक्पादेऽष्टाविंशतिर्लघव., अन्ते गुरुश्चैक , युक्पादे त्रिंशल्लघवो गुरुश्चान्ते भवति।' इति लि. पुस्तके ५. 'तत्र' इति लि. पु. नास्ति ६. 'अभिनव' इति लि. पुस्तके ७ 'मनसिशयवितते' ति लि. पुस्तके, लिखितोदाहरणपुस्तके च ८. 'सुरभि' इति लि. पुस्तके त्रुटितं प्रतिभाति. ९. 'निहित' इति क. मु. पुस्तके १०. 'प्राकृतपिङ्गलसूत्र-(१।१२४)बोधित '**खञ्जा**' छन्दस्त्वसाद्भिन्नमेव. **खजा**' इति नामान्तर वृत्तरत्नाकरे.

इयमेव शिखा पूर्वोक्ते सर्वतः सहतरे पादे अयुजि(३१) सति पारिशेष्यादितरस्मिंश्च युजि(२४) सति 'गङ्गा' नाम [1]छन्दो भवति । अयमर्थः—एकत्रिंशदक्षरो विषमः पादः कर्तव्यः । एकोनत्रिंशद(२९)क्षरश्च समः पादः । शेषं यथाप्राप्तमेव । तत्रोदाहरणम्—

गु

अपगतघनविनादस्वदिशि हृतमनसि परिणतकणकपिलकलमे
(३१)
गु

प्रविकसदसमकुसुमघनपरिमलसुरभितमरुति शरदि समये ।
(२९)
गु

शुचिशशिमहसि विसृतसरसिरुहि मुदितमधुलिहि विमलितपरितटे
(३१)
गु

किमपरमिह कमलमुखि सुखमनुभवति मम हृदयकमलमधुना ॥
(२९)

अर्द्धसमवृत्ताधिकारो निवृत्तः ।
इति भट्टहलायुधविरचितायां छन्दोवृत्तौ पञ्चमोऽध्यायः ।

---

षष्ठोऽध्यायः ।

## यतिर्विच्छेदः ॥ ६ । १ ॥

विच्छिद्यते विरम्यते पदपाठोऽस्मिन्निति विच्छेदो विश्रामस्थानं स चैव यतिरित्युच्यते । नन्वत्र शास्त्रे यतिशब्देन व्यवहारादनेनाभिरर्थकं संज्ञाकरणम् । नैष दोषः । यतिरित्यागमादिव्याचार्यपारम्पर्यागता संज्ञेव तनुमध्यादिवत् । तस्यां शिष्यव्युत्पत्त्य

---

१ 'च' इति लि पु नास्ति　२ 'छन्दो भवति' इति लि पु नास्ति　३ 'विषमपादः' इति लि पुस्तके　४ 'प्रविकसितसमकुसुमभर' इति क सु पुस्तके 'प्रविकसदघनकुसुम' इति लि पुस्तके　५ 'सा यतिरुच्यते' इति लि पुस्तके　६ 'यतिरित्येवमादिराचार्यपरम्परागता' इति लि पुस्तके　७ 'तस्मात्' इति लि पुस्तके.

श्रेमर्थकथनम्[1] 'यतिर्विच्छेदः' इति। अस्ति च लोके शास्त्रान्तरेषु[2] च यतिसंज्ञाव्यवहारः। अपि च[3] 'यतिः' इत्यधिकार आसप्तमाध्यायपरिसमाप्तेः समुद्रेन्द्रियरसादिनिर्देशे[4]पूर्पति-श्रुते। समुद्रादिशब्दाः साकाङ्क्षत्वात् 'यतिः' इत्यनेनैव[5] संबध्यन्ते। यतिशब्दस्याधि-करणव्युत्पत्त्या समुद्राद्यवच्छिन्नेष्वक्षरेषु यतिः कर्तव्येत्यर्थः सिध्यति। तत्रैषा[6] यत्युप-देशोपनिषद्भवति।

> 'यतिः सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः।
> समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके॥
> क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
> यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ॥
> पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत्।
> द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्॥
> नित्यं प्राक्पदसंबन्धाश्चादयः[7] प्राक्पदान्तवत्।
> परेण नित्यसंबन्धाः[8] प्रादयश्च परादिवत्'॥

'यतिः सर्वत्र पादान्ते' इत्यस्योदाहरणम्—'विशुद्धज्ञानदेहाय' इत्यादि। तस्यैव प्रत्युदाहरणम्—

> 'नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे' इत्यादि[9]।

'श्लोकार्धे तु विशेषतः' इत्यत्र संधिकार्याभाव[10] स्पष्टविभक्तिकत्वं च विशेषः। तत्रोदाहरणं यथा—

> 'नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम्।
> ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम्॥'

अत्र 'ईश्वराख्यम्' इत्यस्य पूर्वमकारेण संयोगो न कर्तव्यः। समासे प्रत्युदाहरणं [यथा]—

> 'सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी-।
> पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम्॥'

---

१. 'कथनं' इति लि. पुस्तके. २. 'शास्त्रे च व्यवहारः' इति लि. पुस्तके. ३. 'अयं यतिरिति अधिकार' इति लि. पुस्तके ४. 'समुद्रेन्द्रियरसादिषु' इति लि. पुस्तके. 'समुद्रेन्द्रियरसादित्यादिषु' इति च क मुद्रितपुस्तके. ५. 'एव' इति लि. पुस्तके नास्ति. ६. 'अत्रैषा' इति क. मुद्रितपुस्तके. ७ 'प्राक्पदसवद्धाः' इति लि. पुस्तके. ८. 'नित्यसबद्धाः' इति लि. पुस्तके. ९. 'इत्येवमादि' इति क. मु. पुस्तके. १०. 'संधिकार्याभावात्, स्पष्टविभक्तिकत्वाच्च इति क. मु. पुस्तके.

'समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके' तत्र श्रूयमाणविभक्त्यन्तं व्यक्तविभक्तिकम्  समासान्तभूतविभक्त्यन्तमव्यक्तविभक्तिकम्। तत्रोदाहरण[ यथा ]—

'यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु' इत्यादि।

'व्यक्ताव्यक्तविभक्तिके' इति 'यतिः सर्वत्र पादान्ते' इत्यनेन सम्बध्यते। तत्रोदाहरणम्—

'वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम्।
महाकालं कलाशेषशशिलेखाशिखामणिम्॥'

अपि च।

'नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे॥'
'क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ॥'

तत्रोदाहरणम्—

'पर्याप्तं तप्तचामी,—करकटकतटे श्लिष्टशीतेतरांशौ' इत्यादि। तथा—'कूजत्कोयष्टिकोला,—हलमुखरभुवः प्रान्तकान्तारदेशाः' इत्यादि। तथा—'हासो हस्ताग्रसंवा,—हनमपि तुलिता,—द्रीन्द्रसारद्विपोऽसौ' इत्यादि। तथा—'वैरिश्चानां स योधा,—रितरुधिरभरैर्वा चाननानां पशूनाम्' इत्यादि। तथा—'स्त्रैणे पानीयमाहा दयति यदपि पक्षपाती पृथक्' इत्यादि। समुद्रादाविति किम्। पदमध्ये यतिः पादान्ते मा भूत्। यथा—'प्रणमत भवब—न्धक्लेशनाशाय नारा—यणचरणसरोजद्वन्द्वमानन्दहेतुम्' इत्यादि।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दुष्यति। तत्रोदाहरणम्—

'एतस्या ग,—ण्डतलममलं गाहते चन्द्रकक्षाम्' इत्यादि। 'एतस्या रा,—जति मुखमिदं पूर्णचन्द्रप्रकाशम्।' इत्यादि। तथा—'सुरासुरशिरोनिघृष्टचरणारविन्दः शिवः' इत्यादि।

'पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत्'। अस्यार्थः—योऽयं पूर्वपरयोरेकादेशः स्वरसंधौ विधीयते स क्वचित्पूर्वस्यान्तवद्भवति क्वचित्परस्यादिवत्। तथा च पाणिनिस्मरणम्—'अन्तादिवच्च' (पा० सू० ६।१।८५)। तत्र पूर्वान्तवद्भावे उदाहरणम्—'स्यादस्थानोपगतयमुनासंगमेवाभिरामा'। जम्भारातीभकुम्भोद्भवमिव दधतः इत्यादि।

---

१ 'स्वतन्त्रमव्यक्तविभक्तिकम्, समासान्तभूतमव्यक्तविभक्तिकम्' इति छि पुस्तके
२ 'तत्रोभयोरुदाहरणम्' इति छि पुस्तके  ३ 'तत्र' इति छि पुस्तके नास्ति
४ 'द्विपोऽस्य' इति छि पुस्तके  ५. 'यथा' (?) इति क मु पुस्तके  ६ 'हि' इति छि पुस्तके  ७ 'तत्र' इति छि पु नास्ति  ८ एतदुदाहरणं छि पु नास्ति।
९ 'आदिवद्भवति' इति छि पुस्तके  १० 'पाणिनिस्मरणम्' इति छि पुस्तके

तथा[1]—

'दिक्कालाद्यनवच्छिन्ना-नन्तचिन्मात्रमूर्तये।
स्वानुभूत्येकमानाय[2] नमः शान्ताय तेजसे॥' इत्यादि।

परादिवद्भावे उदाहरणम्—
'स्कन्धं विन्ध्याद्रिबुद्ध्या, निकषति महिष-स्याहितोऽसूनहार्षीत्[3]' इत्यादि।
'शूलं शूलं तु गाढं प्रहर हरहृषीकेशकेशोऽपि वक्रश्चक्रेणाकारि किं नः[4]' इत्यादि।
तत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात्तदादिवद्भवति।
'यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ' इत्यन्तादिवद्भावविधावपि संबध्यते। तेन
'अस्या वक्त्राब्जमवजितपू-र्णेन्दुशोभं विभाति' इत्येवंविधा यतिर्न भवति।
'यणादेशः परादिवत्' तत्रोदाहरणम्—

'विततघनतुषारक्षोदशुभ्राशुपूर्वा-
स्वविरलपदमालां श्यामलामुल्लिखन्ती[6]' इत्यादि।

'नित्यं प्राक्पदसंबन्धाश्चादयः प्राक्पदान्तवत्' तेभ्यः पूर्वा यतिर्न कर्तव्येत्यर्थः। तत्रोदाहरणम्—
'स्वादु स्वच्छं च[7] हिमसलिलं प्रीतये कस्य न स्यात्' इत्यादि।
नित्यं प्राक्पदसंबन्धा इति किम्। अन्येषां पूर्वपदान्तवद्भावो माभूत्। तद्यथा—
'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या' इत्यादि[8]।
तथा[9]—'इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे' इत्यादि।
'परेण नित्यसंबन्धाः प्रादयश्च परादिवत्' तेभ्यः परा यतिर्न भवतीत्यर्थः। तत्रोदाहरणम्[10]—
'दुःखं मेऽप-क्षिपति[11] हृदये दुःसहस्त्वद्वियोगः' इत्यादि।
परेण नित्यसंबन्धा इति किम्। कर्मप्रवचनीयेभ्यः परापि यतिर्यथा[12] स्यात् इति, तत्रोदाहरणम्—

'प्रियं प्रतिस्फुरत्पादे मन्दायन्ते नखत्विषः[13]।'
'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' इत्यादि।

---

१ 'तथा' इति क मु पुस्तके नास्ति २. 'स्वसंवित्स्वैकमानाय' इति लि पुस्तके. ३ 'अस्तं प्रयास्यन्' इति लि. पुस्तके ४ 'किं न' इति क मु पुस्तके। 'के ते' इति च लि पुस्तके ५ 'इत्यस्य' इति लि पुस्तके ६ 'उल्लिखन्तम्' इति लि. पुस्तके. ७. 'स्वादु स्वच्छं सलिलमपि च' इति क मु पुस्तके ८ 'इति' इति लि पुस्तके. ९ 'तथा' इति लि पुस्तके नास्ति. १० 'तत्र' इति लि पुस्तके नास्ति ११. 'प्रक्षिपति' क. मु. पुस्तके. १२. 'यतिः' इति लि पुस्तके नास्ति १३. 'न खल्विति' इति क. मु. पुस्तके.

अथ तु सादीनां प्रादीनां चैकाक्षरत्वेनैकाक्षराणामेव पादान्ते यत्यामन्तादिवद्भाव उच्यते । नत्वनेकाक्षराणां पदमध्ये यती । तत्र हि पदमध्येऽपि चामीकरादिष्विव विरम्यनुज्ञातत्वात् तत्र चादीनामुदाहरणम्—

'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्' इति ।

प्रादीनामुदाहरणम्—

'द्वारास्थप्रमोद हसितमिव परिस्पष्टमासौ सखीभि' इत्यादि ।

न पर्यन्तोऽस्ति वृत्तानां प्रस्तारगणनाविधौ ।
पूर्वाचार्यकृतैभिरस्त्यादिह किंचिदिहोच्यते ॥

(उक्थायाम्) एकाक्षरायाम्—

श्रीच्छन्दः—श्री सा ।

ध गो ॥ प्रा॰ पिं॰ सू॰ २।१॥

(अत्युक्थायाम्) द्व्यक्षरायाम्—

कामच्छन्दः—दीहा बीहा ।

कामो रामो ॥ प्रा॰ पिं॰ सू॰ २।४॥

('स्त्री इति नामान्तरं कामस्य च्छन्द कौस्तुभादौ ।)

मधुच्छन्दः—लहु जुआ ।

महु भुअ ॥ प्रा॰ पिं॰ सू॰ २।६ ॥

महीछन्द—लगो अहीं ।

मही कही ॥ प्रा॰ पिं॰ सू॰ २।८ ॥

सारुच्छन्दः—सारु एह ।

गो नि देह ॥ प्रा॰ पिं॰ सू॰ २।१० ॥

(मध्यायाम्) त्र्यक्षरायाम्—

तालीच्छन्दः—ताली ए जाणीए ।

गो कण्णो तिण्णो ॥ प्रा॰ पिं॰ सू॰ २।१२ ॥

---

१ 'चैकाक्षरत्वेन' इति खि पुस्तके नास्ति २ 'अनेकाक्षराणां वा' इत्यधिक क मु पुस्तके ३ 'न त्वेकाक्षराणाम्' इति क मु पुस्तके ४ 'पदमध्यमसौ' इति खि पुस्तके ५ 'इति' इति खि पुस्तके नास्ति 'परिस्पष्टमाश्वासखीभि' इति क मु पुस्तके ६ प्रस्तारगणना त्वष्टमाध्याये प्रपञ्चयिष्यते, अत्र तु धीमता भगवता पिङ्गलाचार्येण गायत्र्याद्युत्कृतिपर्यन्तच्छन्दोऽनुसारीणि वृत्तानि, दण्डकजातयश्च प्रदर्शिता नतूक्थादिच्छन्दःपञ्चकानुसारीणि वृत्तानि । तानि च्छन्दांसि प्राकृतपिङ्गलच्छन्दःकौस्तुभप्रभृतिग्रन्थोपलब्धानि प्रदर्श्यन्ते । यथा—७ 'पूर्वाचार्यकृत वृत्तमिह' इति क मु पुस्तके

('नारी' इति नामान्तरं ताल्याश्छन्दःकौस्तुभादौ ।)

प्रियाच्छन्दः—हे पिए लेक्खिए ।

अक्खरे तिण्णि रे ॥ प्रा० पिं० सू० २।१४ ॥

('मृगी' इति नामान्तरं प्रियायाश्छन्दःकौस्तुभादौ ।)

शशीच्छन्दः—ससी यो जणीयो ।

फणीन्दो भणीओ ॥ प्रा० पिं० सू० २।१६ ॥

रमणच्छन्दः—सगणो रमणो ।

सहिओ कहिओ ॥ प्रा० पिं० सू० २।१८ ॥

पञ्चालच्छन्दः—तक्कार जं दिट्ठ ।

पञ्चाल उक्किट्ठ ॥ प्रा० पिं० सू० २।२० ॥

मृगेन्द्रच्छन्दः—णरेन्द्र ठवेहु ।

मिएन्द करेहु ॥ प्रा० पिं० सू० २।२२ ॥

मन्दरच्छन्दः—भो जहि सो सहि ।

मन्दर सुन्दर ॥ प्रा० पिं० सू० २।२४ ॥

कमलच्छन्दः—कमल पभण ।

सुमुहि णगण ॥ प्रा० पिं० सू० २।२६ ॥

(प्रतिष्ठायाम्) चतुरक्षरायाम्—

तीर्णाच्छन्दः—चारी हारा इट्ठा कारा ।

वीए कण्णा जाणे तिण्णा ॥ प्रा० पिं० सू० २।२८ ॥

('कन्या' इति नामान्तरं तीर्णायाश्छन्द कौस्तुभादौ ।)

धारीच्छन्दः—वण्ण चारि सुद्धि धारि ।

विण्णि हार दो स सार ॥ प्रा० पिं० सू० २।३० ॥

नगाणीच्छन्दः—पओहरो गुरुत्तरो ।

नगाणिआ स जाणिआ ॥ प्रा० पिं० सू० २।३२ ॥

सतीच्छन्द.—'नगौ सती ॥'

इत्यधिकं छन्द कौस्तुभादावुपलभ्यते । प्राकृतपिङ्गलवृत्तरत्नाकरादौ 'तु' न ।

(सुप्रतिष्ठायाम्) पञ्चाक्षरायाम्—

संमोहाच्छन्दः—संमोहारूअ दिट्ठो सो भूअम् ।

बे कण्णा हारा भूअत्तासारा ॥ प्रा० पिं० सू० २।३४ ॥

('पङ्क्तिः' इति नामान्तर संमोहाख्यच्छन्दस )

---

१. 'तत्र गायत्र्या छन्दसि वृत्तम्' इति लि. पुस्तके । अत्र त्वेकमेव वृत्तं दर्शि
प्राकृतपिङ्गलच्छन्द.कौस्तुभादावुपलब्धानि वृत्तानि प्रदर्श्यन्ते यथा—

तत्र गायत्रे छन्दसि वृत्तम्—

## तनुमध्या त्यौ ॥ ६ । २ ॥

यस्य पादे तकार (ऽऽ।) यकारौ (।ऽऽ) तत् 'तनुमध्या' नाम वृत्तम् । तत्रो दाहरणम्—

तगणः यगणः तगणः यगणः
ऽ ऽ । — । ऽ ऽ ऽ ऽ । । — ऽ ऽ
ध—न्या त्रि—पु नी—षा क—न्या त—नु—म—ध्या ।

---

१ षडक्षरचतुष्पादात्मकगायत्रीच्छन्दस प्रस्तारे क्रियमाणे चतुःषष्टिभेदा जायन्ते तत्र त्रयोदशोऽयं भेद', प्राकृतपिङ्गले नाम वर्णितः २ 'तगणयगणौ भवतः' इति छि पुस्तके ३ 'तत्र' इति छि पुस्तके नास्ति ४ 'त्रिगभीरा' इति छि पुस्तके ।

हारीच्छन्दः—आइदि भन्ते हारे सुजुते ।
मज्झेक्कग भो हारी अच्छन्दो ॥ प्रा० पिं० सू० २।१६ ॥
('हारीतबन्ध' इति नामान्तरं हारी च्छन्दस )
हंसच्छन्द'—पिङ्गलदिट्ठो भए इ सिट्ठो ।
कण्णइ दिम्मो हंस सुणिम्मो ॥ प्रा० पिं० सू० २।१८ ॥
('पङ्क्तिः' इति नामान्तरं हंसस्य छन्द कौस्तुभादौ, छन्दोमञ्जर्यां च )
यमकच्छन्दः—सुपिअगण सरसुगुण ।
सरइ गण जमअ भण ॥ प्रा० पिं० सू० २।४० ॥
विदग्धकच्छन्दः—'रो छगो यदा स्याद्विदग्धकः' ।
प्रियाच्छन्द'—'ससगौ प्रिया' इत्यधिक छन्द कौस्तुभवृत्तरत्नाकरादावुपलभ्यते न प्राकृतपिङ्गले ॥
शेषाच्छन्दः— बाराहा मत्ता अ कण्णा तीआ होतम् ।
हारा छक्का बन्धो सेसा राआ छन्दो' ॥ प्रा० पिं० सू० २।४२ ॥
('शेषराज' इत्यपि नामान्तरं रविदासमते, 'विद्युल्लेखा' इति च नामान्तरं वृत्त रत्नाकरादौ शेषाख्यच्छन्दसः) ।
तिलकाच्छन्द'— पिअ तिल्लअ धुअं सगणेण जुअम् ।
छअ वण्ण पओ कल अट्ठ धओ ॥ प्रा० पिं० सू० २।४४ ॥
(रविदासमते 'डिल्ला, भद्र' इति नामान्तरे तिलकाच्छन्दस )
विज्जोहाच्छन्दः—'अक्खरा जे छआ पाअ पाअ ट्ठिआ ।
मत्त पञ्च दुआ विण्णि जोहागणा' ॥ प्रा० पिं० सू० २।४६ ॥
('विमोहा' इति नामान्तरं वाणीभूषणे, 'मल्लरी' इति छन्द कौस्तुभादौ विज्जो हाख्यच्छन्दस )।

तगण यगणः तगण यगण

ऽ ऽ । — । ऽ • ऽ , ऽ ऽ । — । ऽ • ऽ

श्रो–णी–स्त—न–गु–र्वी भू–यो–त्प–ति–भो–ग्या ॥

अत्र तु पादान्ते विशेषेण विश्राम· कर्तव्य इत्याम्नाय· ॥

(उष्णिहि)

## कुमारललिता ज्सौ ग् ॥ ६ । ३ ॥

यस्य पादे जकार (।ऽ।) सकारौ (॥ऽ) गकार (ऽ) श्च तद्वृत्तं 'कुमारललिता' नाम। त्रिभिश्चतुर्भिश्च यत्युपदेशं वर्णयन्ति । तत्रोदाहरणम्—

जगण सगण गु० जगण सगण गु०

। ऽ । — । । ऽ — ऽ । ऽ । — । । ऽ — ऽ

य–दी–य–र–ति–भू–मौ वि–भा–ति–ति–ल–का–ङ्क ।

जगण सगण गु० जगण सगण गु०

। ऽ । — । । ऽ — ऽ । ऽ । – । । ऽ ऽ

कु–मा–र–ल–लि–ता–सौ कु–ला–न्य–ट–ति ना–री ॥

---

१. 'उर्वीपतिभोग्या' इति लि पुस्तके २ अत्र त्वेकमेव वृत्तं दर्शितम्, प्राकृतपिङ्गलच्छन्द कौस्तुभप्रभृतिग्रन्थोपलब्धानि वृत्तानि प्रदर्श्यन्ते यथा— ३. 'जगण· सगणौ गकारश्च भवति इति लि पुस्तके , ४ 'तत्र' इति लि पुस्तके नास्ति

**चतुरंसाच्छन्दः**—'ठउ **चउरंसा** फणिवइभासा ।

दिअवरकण्णो फुल रसवण्णो ॥' प्रा० पिं० सू० २१४८ ॥

('**शशिवदना, चण्डरसा, चतुर्वर्णा**' इति नामान्तराणि छन्दःकौस्तुभादौ **चतुरंसा**ख्यच्छन्दसः) ।

**मन्थानच्छन्दः**—'कामावआरेण अद्धेण पाएण ।

मत्ता दहा सुद्ध **मन्थान** सो मुद्ध ॥' प्रा० पिं० सू० २१५१ ॥

**शङ्खनारीच्छन्दः**—'खडावण्णवद्धो भुअङ्गापअद्धो ।

पआ पाअ चारी कही **संखणारी** ॥' प्रा० पिं० सू० २१५३ ॥

('**सोमराजी, शङ्खधारी**' इति नामान्तरे छन्दःकौस्तुभादौ **शङ्खनार्या**ख्यच्छन्दसः) ।

**मालतीच्छन्दः**—'धअं सरवीअ मणीगुण तीय ।

दई लहु अन्त स **मालइ** कन्त ॥' प्रा० पिं० सू० २१५५ ॥

('**सुमालतिका**' इति नामान्तर वाणीभूषणे **मालत्याख्य**च्छन्दस ) ।

**दमनकच्छन्दः**—'दिअवर किअ भणहि सुपिअ ।

**दमणअ** गुणि फणिवइ भणि ॥' प्रा० पिं० सू० २१५७ ॥

**वसुमतीच्छन्दः**—'त्सौ चेद्वसुमती' इत्यधिकं छन्द कौस्तुभादौ ।

अत्र केचिद् द्वाभ्यां (२) पञ्चभि (५) श्च यतिमिच्छन्ति । तत्रोदाहरणम्—

जगणः सगण गु जगणः सगण गु

। ऽ । — । । ऽ — ऽ । ऽ । — । । ऽ ऽ

इ–द(२)व–द–न–प–द्म(५) प्रि–ये(२) त–व वि–भा–ति(५),

जगणः सगणः गु जगणः सगणः गु

। ऽ । — । । ऽ — ऽ । ऽ । — । । ऽ ऽ

इ–इ (२),प्र–ज–ति मु–ग्धे (५) भ–मो(२)भ्र–म–र–तां मे (५) ॥

(अनुष्टुभि)

## माणवकाक्रीडितक भ्तौ ल्गौ ॥ ६ । ४ ॥

यस्य पादे भकार (ऽ।।) तकारो (ऽऽ।) लकार (।) गकारो (ऽ) च तद् 'माणवका-क्रीडितक' नाम वृत्तम् ॥ तत्रोदाहरणम्—

---

१ 'तत्र' इति लि पुस्तके नास्ति २—'अत्र तु चत्वार्येव वृत्तानि दर्शितानि परंतु प्राकृतपिङ्गलच्छन्द कौस्तुभप्रभृतिच्छन्दोग्रन्थेष्वन्यान्यपि छन्दांस्युपलभ्यन्ते । यथा—' इति लि पुस्तके ३ 'मगणतगणौ, इति लि पुस्तके ४ 'माणवकाक्रीडितं' नाम लि पुस्तके—'माणवकम्' इति नामान्तरं छन्दःकौस्तुभवृत्तरत्नाकरादौ॥

समानिकाच्छन्द'—'चारि हार किज्जही तिण्णि गन्ध दिज्जही ।
सत्त अक्खरा ठिआ सा समाणिआ पिआ ॥ प्रा पिं सू० २।५९ ॥

सुवासच्छन्द —'भणउ सुवासउ लहु सुविसेसउ ।
रचि चउमत्तह भगणइ अन्तह ॥ प्रा० पिं० सू० २।६१ ॥

करहञ्चीच्छन्दः—'चरण गण विप्प पढम लइ थप्प ।
जगण तसु अन्त मुणइ करहञ्च ॥ प्रा० पिं० सू० २।६३ ॥

दीपोच्छन्दः—'सत्ता दीहा जाणेही कण्णा ती गो माणेही ।
चाउद्दाहा मत्ताणा सीसारूअं छन्दाणा ॥' प्रा० पिं० सू० २।६५॥

मधुमतीच्छन्दः—'ननगा मधुमती ॥
मदलेखाच्छन्द'— म स्गौ मदलेखा ॥
चूडामणिच्छन्दः— चूडामणिस्तभगा ॥'
हंसमालाच्छन्दः— सरगा हंसमाला ॥
मधुमत्यादीनि चत्वारि वृत्तानि छन्दःकौस्तुभादावेवोपलभ्यन्ते, न प्राकृतपिङ्गले

तुङ्गाच्छन्द'—'तरलणअणि तुङ्गो पढमगणसुरंगो ।
मगणजुअलबद्धो गुरुजुअलपसिद्धो ॥' प्रा० पिं० सू० २।७३ ॥

भगणः तगण ल० गु० भगण· तगण· ल० गु०
S I I—S S I—I—S S I I—S — S I—I—S
माणव–का(४)क्रीडि–त–कं, (४)यः कुरु–ते,(४)वृद्ध–व–याः ।
भगण तगण ल० गु० भगण· तगणः ल० गु०
S I I—S S I—I S S I I—S S I—I—S
हास्यम–सौ(४),याति ज–ने, (४) भिक्षुरि–व,(४)क्लीच–प–ल· ॥

अत्र चतुर्भि (४) श्चतुर्भिश्च यतिरित्याम्नायः ॥

## चित्रपदा भौ गौ ॥ ६ । ५ ॥

यस्य पादे भकारौ (ऽ॥·ऽ॥) गकारौ (ऽ ऽ) च भवतस्तत् 'चित्रपदा' नाम वृत्तं। तत्रोदाहरणम्—

भगण· भगण गु० गु० भगण भगण गु० गु०
S I I—S I I—S S S I I — S I I S S
यस्य मु–खे प्रिय–वा–णी चेतसि सज्जन–ता–च ।
भगण भगण गु० गु० भगण· भगण गु० गु०
S I I—S I I—S—S S I I—S I I S—S
चित्रप–दा पि च लक्ष्मी—स्तं पुरु–षं न ज–हा–ति ॥

## विद्युन्माला मौ गौ ॥ ६ । ६ ॥

---

१ लिखितपुस्तके पञ्चमं षष्ठं च सूत्रे चित्रपदाविद्युन्मालालक्षणात्मके चतुर्थपञ्चमत्वेन सवृत्ति सोदाहरणं च वर्तेते । माणवकाक्रीडितलक्षणात्माकसूत्रं च षष्ठत्वेन निर्दिष्टम् । उक्ताष्टाक्षरप्रस्तारभेदाना मध्ये पञ्चपञ्चाशत्तमो (५५) भेदश्चित्रपदेति नाम्ना प्रसिद्धः । **'वितान'** इति नामान्तर **चित्रपदायाः** 'वितानमन्यत्' पिं० सू० ५।८ इति रीत्या. २. 'भगणौ' इति लि. पुस्तके.

**कमलच्छन्दः**—'पढम गण विप्पओ विहु तह णरेंदओ ।
गुरुसहित अन्तिणा **कमल** एम भत्तिणा ॥' प्रा० पिं० सू० २।७५॥

**पद्ममालाच्छन्दः**—'**पद्ममाला** च रौ गौ'
**सुचन्द्राभाच्छन्दः**—'**सुचन्द्राभा** यूरौ ग्लौ'
**सुविलासाच्छन्दः**—'**सुविलासा** सरौ ग्लौ हि' } (छन्द कौस्तुभादौ ॥)
**गजगतिच्छन्दः**—'नभलगा **गजगतिः**' (छन्दोमञ्जर्याम्)
**अचलच्छन्दः**—'वसुलम**चल**मिति'
**कमलच्छन्दः**—'**कमल**मिति पञ्चलम्'
**अञ्चलच्छन्दः**—'रगणयुत**मञ्चलम्**'
**लताछन्दः**—'रौ यलौ गुरु स्याल्लता } (क्वचित्)
अत्र पादान्ते यतिः ।

यस्य पादे मकारौ ( SSS,SSS ) गकारौ ( S.S ) च तद् 'विद्युन्माला' नाम वृत्तम् ॥ तत्रोदाहरणम्—

मगणः मगणः गु गु
S S S—S S S S S—S
विद्युन्मा—ला(४),लोलान् भो—गान्
मगणः मगणः गु गु
S S S—S S S—S—S
मुक्त्वा मु—क्तौ(४) यत्न कु—र्यात् ।
मगणः मगणः गु गु
S S S— S S S—S—S
ध्यानोत्प—न्न (४),नि सा—मा—न्य
मगणः मगणः गु गु
S S S—S S S—S—S
सौख्यं भो—(४) क्तुमचा—का—ङ्क्षेत् ॥

अत्र चतुर्भि (४) श्चतुर्भिश्च यतिरित्याम्नायः ॥

## हंसरुत म्नौ गौ ॥६ । ७ ॥]

यस्य पादे मगण (SSS) नगणौ (।।।) गकारौ (S.S) च भवतस्तद् 'हंसरुत' नाम ॥ तत्रोदाहरणम्—

मगणः नगणः गु गु मगणः नगणः गु गु
S S S—। । ।—S S S S S—। ।।S—S —S
लावण्यं वपुषि का—न्ते लोकातीत—मतति—सौ—म्यम् ।
मगणः नगणः गु गु मगणः नगणः गु गु
S S S—। । ।—S—S S S S—। । ।—S—S
नैपुण्यं मनसि च—ते द्वैविध्य किमिति च—स्ते ॥

---

१ 'मगणौ गकारौ च भवत ' लि पुस्तके २ उक्ताद्यक्षरप्रस्तारे सर्वगुर्वात्मक आद्यो भेदो 'विद्युन्माला' इति नाम्ना प्रसिद्ध विज्जुमाला मत्ता सोला पाए कण्णा चारी लोला । एअं रूअं चारी पाआ मत्ती खत्ती मिस्सू राआ ॥ प्रा० पिं० सू० २।६७। विद्युल्लेखा इति नामान्तरम् एतदतिरिक्तानि 'समानिका-प्रमाणिका-वितान-नाराचक'-प्रभृतीनि च्छन्दांसि पञ्चमाध्याये समालोच्यानि ३ लि पुस्तके 'वृत्त' इति नास्ति । ४ चतुर्भिश्चतुर्भिर्यतिरित्युपदेश' इति लि पुस्तके ५ उक्ताद्यक्षरप्रस्तारभेदेषु सप्तपञ्चाशत्तमो भेदो (५७) 'हंसरुत' इति नाम्ना प्रसिद्धः लिखितपुस्तकेऽस्य सूत्रस्य संख्या नवमत्वेन, भुजगशिशुसृतालक्षणात्मकस्याग्रिमसूत्रस्य चाष्टमत्वेन निर्देश । ६ 'गकारद्वय च भवति इति लि पुस्तके

( वृंहत्याम् )

---

१ अत्र तु द्वावेव भेदो संदर्शितौ परन्तु **प्राकृतपिङ्गलच्छन्दःकौस्तुभ**प्रभृतिग्रन्थेषूपलब्धा भेदाः प्रकाश्यन्ते यथा—

**महालक्ष्मीच्छन्दः**—'दिट्ठ जोहा गणा तिण्णिआ णाअराएण जा विण्णिआ ।
मासअद्धेण पाअ ट्ठिअ जाण मुद्धे **महालच्छिअम्** ॥'
प्रा० २।७७ ॥

**सारङ्गिकाच्छन्दः**—'दिअवर कण्णो सअणं पअ पण मत्तागणणम् ।
सुरमुणिमत्ता लहिअ सहि **सरगिका** कहिअम् ॥'
प्रा० २।७९ ॥

**'सारसा, शार्ङ्गिका'** इत्यपि नामान्तरे **सारङ्गिकाया** (क्वचित्) ।

**पाइत्ताच्छन्दः**—'कुन्तीपुत्ताजुअ लहिअ तीए विप्पो धुअ कहिअम् ।
अन्ते हारो जह जणिअ **पाइत्ता**रूअ उ कहिअम्॥प्रा०२।८१

**'कुसुमवती, पवित्रा'** इति नामान्तरे **पाइत्ताख्यस्य** ।

**कमलच्छन्दः**—'सरसगणरमणिआ दिअगणजुअ पलिआ ।
गुरु धरिअ पइपनु दहकलअ **कमलनु** ॥' प्रा० २।८३ ॥

**'कमला'** इत्यपि च नामान्तरे **कमलस्य** (क्वचित्) ।

**विम्वच्छन्दः**—'रइअ फणि **विम्व** एसो गुरुजुअल सव्वसेसो ।
सिरहि ठिअ मज्झ राओ गुणह गुणि एसहाओ ॥' प्रा० २।८५

**'विम्वा'** इति नामान्तरं क्वचित् । वाणीभूषणे तु गणभेदेन **विम्वलक्षणमुक्तम्**

**तोमरच्छन्दः**—'जसु आइ हत्थ विआण तह व पओहर जाण ।
पभणेइ णाअणरिन्द इम माणु **तोमरछन्द** ॥' प्रा० २।८७ ॥

**पामालीच्छन्दः**—'णाआराआ जप्पे सारा ए चारी कण्णा हन्ते हाराए ।
अट्ठादाहा मत्ता पाआए **रूआमाली** छन्दा जम्पीए ।
प्रा० २।८९ ॥

**'रूपामाला'** इति नामान्तर **रूपामाल्याः** क्वचित् ॥

**मणिमध्यच्छन्दः**—'स्यान्**मणिमध्यं** चेद्भमसा. ।' छन्द कौस्तुभे ।

**स्निग्धाच्छन्दः**—'**स्निग्धा** स्याद्भममा यत्र हराननयुगैर्यतिः ।' (श्रीकृष्ण)

**भुजङ्गसंगताच्छन्दः**—'सजरै**र्भुजङ्गसंगता** ।' छन्द कौस्तुभे ।

**भद्रिकाच्छन्दः**—'भद्रिका भवति रो नरौ' वृत्तरत्नाकरे.

**लताच्छन्दः**—'रो यलौ गुरु स्याल्लता' क्वचित् ।

**वीरलक्ष्मीच्छन्दः**—'वीरलक्ष्मीरियं रत्रया' क्वचित् ।

**कुसुमिताच्छन्दः**—कुसुमिता नरौ रो यदा । ( क्वचित् ) ।

## भुजगशिशुसृता नौ मः ॥ ६ । ७ ॥

यस्य पादे नकारौ (।।। ।।।) मकार (ऽऽऽ) श्च भवति तत् 'भुजगशिशुसृता' नाम वृत्तम् ॥ तत्रोदाहरणम्—

नगणः नगणः मगणः　　नगणः नगणः मगणः

। । ।—। । ।—ऽ ऽ ऽ　　। । ।—। । ।—ऽ ऽ ऽ

इयम-धिकत-र,(७)रम्या　विकच—कुवल—य(७),श्यामा ।

नगणः नगणः मगणः　　नगणः नगणः मगणः

। । ।—। । ।—ऽ ऽ ऽ　　। । ।—। । ।—ऽ ऽ ऽ

र-म-य-ति हृद-य(७)मूर्ना　भुजग-शिशुसृ-ता,(७)नारी ॥

वक्रगतिरित्यर्थः ॥ शिशुशब्दस्य सार्थकत्वादन्यैरप्युक्तम् ।

अभ्यसता नु तरणीगतिवक्रभावा-
नुन्मूलिता फणिशिशो भवतापराधा ॥ इति

सप्तभिर्द्वाभ्यां च यतिरित्याम्नाय ॥

## हलमुखी र्नौ सः ॥ ६ । ८ ॥

यस्य पादे रेफ (ऽ।ऽ) नकार (।।।) सकारा (।।ऽ) भवन्ति तद्वृत्त 'हलमुखी' तत्रोदाहरणम्—

रगण　नगणः सगणः　　रगण　नगणः सगण

ऽ । ऽ — । । ।—। । ऽ　　ऽ । ऽ　　। । । । । ऽ

गण्डयो (३)-रतिश-कृश, (६) यन्मुख, (३) प्रकट-दशनम् (६) ॥

रगणः　नगणः सगण　　रगण　नगणः सगणः

ऽ । ऽ — । । ।—। । ऽ　　ऽ । ऽ — । । ।—। । ऽ

आयतं,(३) कलह-निरतं (६) तां प्रिय, (३) त्यज ह-लमुखीम् (६) ॥

त्रिभि षड्भिश्च यतिरित्याम्नाय ।

---

१ चतुष्पादापवृहतीपादघटकीभूतानां नवाक्षराणां प्रस्तारे क्रियमाणे द्वादशाधिक पञ्चशतभेदा (५१२) भवन्ति । तत्र (६४) चतुःषष्टितमोऽस्य भेदो 'भुजगशिशुसृता' इति नाम्ना प्रसिद्ध, अस्या एव 'भुजगशिशुभृता', 'भुजगशिशुयुता' 'भुजगशिशुसृता', 'भुजगशिशुसुता' इति नामान्तराणि छन्द कौस्तुभादौ लभ्यन्ते । २ 'नगणौ मगणश्च' लि पु ३ उक्तनवाक्षरप्रस्तारस्यैकपञ्चाशदधिकद्विशततमोऽस्य भेदो (२५१) 'हलमुखी' ति नाम्ना ख्यात ॥ कलिकातामुद्रिते प्राचीनपुस्तके इदस्तल्लक्षणसूत्रस्याभावात् सूत्रात् प्रथम निर्देश । भ्रममूलोऽत्र समावेश इति ज्ञायते । ४ 'तद् हलमुखी नाम । उदाहरणम्' लि पुस्तके ।

(पङ्क्तौ[1])

## शुद्धविराड्[2] म्सौ ज्गौ[3] ॥ ६ । ९ ॥

यस्य पादे मकार[4] (SSS) सकार (॥S।) जकार (।S।) गकारा (S) भवन्ति तद्वृत्तं 'शुद्धविराड्' नाम ॥ तत्रोदाहरणम्—

मगण सगण जगण गु० मगण सगण जगण गु०

S S S—। । S—। S ।—S S S S—। । S—। S ।—S

विश्वं ति–ष्ठ–ति कु–क्षिकोट–रे वक्षे य–स्य स र–स्वती स–दा ।

मगण सगण जगण गु० मगण सगण जगण गु०

S S S—। । S—। S ।—S S S S—। । S—। S ।S—S

अस्मद्गु–रुपिता–महो गु–रुर् ब्रह्मा शु–द्धविराड् पुनातु नः[5] ॥

अत्र पादान्ते यतिः ॥

---

१—पङ्क्तिच्छन्दःपादघटकीभूतानां दशाक्षराणां प्रस्तारे क्रियमाणे चतुर्विंशत्यधिकसहस्रभेदा (१०२४) जायन्ते तेष्वत्र षडेव भेदाः प्रदर्शिता सन्ति. परंतु प्राकृतपिङ्गलच्छन्द कौस्तुभादिग्रन्थेषूपलभ्यमाना भेदा अपि प्रदर्श्यन्ते । यथा—

**सारवतीच्छन्दः**—'दीह लहूजुअ दीहलहू **सारवई** धुअ छन्द कहू ।
अन्त पओहर ठाउ धआ चोदहमत्तविरामकआ ॥'
प्रा० २१९५ ॥

**'हारवती'** इत्यपि नामान्तरं **सारवत्याः** ।

**सुषमाच्छन्दः**—'कण्णो पढमो हत्थो जुअलो कण्णो तिअलो हत्थो पअलो ।
सोला कलआ छक्का वलआ एसा **सुसमा** दिट्ठासुसमा' ॥
प्रा० २१९७ ॥

**अमृतगतिछन्दः**—'दिअवर हार पअलिआ पुण वि तह ट्ठिअ करिआ ।
वसुलहु वे गुरुसहिआ **अमिअगई**, धुअ कहिआ ॥'
प्रा० २१९९ ॥

**'त्वरितगतिः, अमृततिलका, अमृतगतिका'** इति नामान्तराणि **अमृतगतेः**

**मनोरमाच्छन्दः**—'नरजगैर्भवेन्**मनोरमा** ।' छन्द कौस्तुभे ।

**पथ्याच्छन्दः**—'रो यजौ च **पथ्या** गुरूत्तरा ।' क्वचित् ।

**दीपकमालाच्छन्दः**—'**दीपकमाला** भो मजौ गुरु ।' क्वचित् ।

**हंसीच्छन्दः**—'**हंसी** मभनगयुता ।' वृत्तरत्नाकरपरिशिष्टे ।

---

२. उक्तदशाक्षरप्रस्तारस्य पञ्चचत्वारिंशदुत्तरत्रिशततमोऽयं भेदः (३४५) '**शुद्धविराट्**' नाम्ना प्रसिद्ध । '**विराट्**' इत्यपि नामान्तरं क्वचित् । ३. 'मसौ ज्गौ इति लि. पुस्तके ४. 'मगणसगणजगणगकारा भवन्ति लि. पुस्तके । ५. 'वः' लि. पुस्तके.

## पणवो म्नौ यगौ ॥ ६ । १० ॥

यस्य पादे मकार (ऽऽऽ) नकार (।।।) यकार (।ऽऽ) गकारा (ऽ) भवन्ति तद्वृत्तं 'पणवो' नाम ॥ तत्रोदाहरणम्—

मगण। नगण। यगण। गु मगण। नगण। यगण। गु
ऽ ऽ ऽ—। । ।—। ऽ ऽ—ऽ ऽ । ऽ—। । ।—। ऽ ऽ—ऽ
मीमांसा–रस (५)म–मृत पी–त्वा शास्त्रोक्ति पटु(५)रि–तरा मा–भि ।
मगण। नगण। यगण। गु मगण नगण। यगण। गु
ऽ ऽ ऽ—। । ।—। ऽ ऽ—ऽ ऽ ऽ ऽ—। । ।—। ऽ ऽ—
एष सं–सदि(५)धि–षुपां म–ध्ये अस्माको जय–(५),प–णव भ–स्वात् ॥

अत्र पञ्चभिः पञ्चभिर्यतिरित्याम्नायः ॥

## रुक्मवती भ्मौ सगौ ॥ ६ । ११ ॥

यस्य पादे भकार (ऽ।।) मकार (ऽऽऽ) सकार (।।ऽ) गकारा (ऽ) भवन्ति तद्वृत्तं 'रुक्मवती' नाम ॥ तत्रोदाहरणम्—

भगण। मगण। सगण गु भगण मगण। सगण गु
ऽ । ।—ऽ ऽ ऽ—। । ऽ—ऽ ऽ । ।—ऽ ऽ ऽ—। । —ऽ
पादत–ले पद्मो–दरगौ–रे राजति यस्या ऊ–र्ध्वगरे–खा ।
भगण। मगण। सगण। गु भगण। मगण। सगण गु
ऽ । ।— ऽ ऽ—। । ऽ—ऽ ऽ । ।—ऽ ऽ ऽ—। । ऽ—ऽ
सा भव–ति स्त्री ल–क्ष ण यु–क्ता रुक्मव–ती सौमा–ग्यवती च ॥

## मयूरसारिणी र्जौ र्गौ ॥ ६ । १२ ॥

यस्य पादे रेफ (ऽ।ऽ) जकारौ (।ऽ।) रेफ (ऽ।ऽ) गकारौ(ऽ)च तद्वृत्तं 'मयूरसारिणी' नाम ॥ तत्रोदाहरणम्—

---

१ पञ्चदशाक्षरप्रस्तारस्यैकविंशत्यधिकशततमोऽस्य भेद (१२१) 'पणव' नाम्ना स्यात् । 'प्रणव' इत्यपि नामान्तरम् । २ मगणनगणयगणगकारा' इति पुस्तके । ३ पञ्चदशाक्षरप्रस्तारस्य नवनवत्यधिकशततमोऽस्य भेदो (१९९) 'रुक्मवती' नाम्ना प्रसिद्ध । अस्या नामान्तराणि यथा—'रूपवती' इति छन्दोमञ्जरी, 'चिलास'क्वचित्, 'चम्पकमाला' प्राकृतपिङ्गले । तल्लक्षण यथा—

'हार ठवीजे काहलजुओ कन्तिमपुत्ता एगुरुजुत्ता ।

हत्थ करीजे हार ठवीसे चम्पकमाला छन्द कहीजे ॥ प्र २।९३॥

पादान्ते यति ॥ ४ भगणमगणसगणगकारा' इति पुस्तके ५. पञ्चदशाक्षरप्रस्तारस्यैकसप्तत्यधिकशततमोय भेदो 'मयूरसारिणीनाम्ना' प्रसिद्ध । ६ रगणजगणौ रगणगकारौ च भवत' इति पुस्तके

रगणः जगण रगण गु० रगणः जगण रगण गु०

ऽ । ऽ—। ऽ ।—ऽ ऽ ।—ऽ ऽ । ऽ—। ऽ ।—ऽ । ऽ—ऽ

या वना–न्तराण्यु–पै ति र–न्तुं या भु–ज–ङ्ग भोग–मुक्तचि–त्ता ।

ऽ । ऽ—। ऽ ।—ऽ । ऽ—ऽ ऽ । ऽ—। ऽ ।—ऽ । ऽ—

या द्रुतं प्रयाति सन्नतां–सा ता मयू–रसारि–णीं विज–ह्यात् ॥

अत्र पादान्ते यतिः ॥

## मत्ता[2] म्भौ स्गौ ॥ ६ । १३ ॥

यस्य पादे मकार[3] (ऽऽऽ) भकार (ऽ।।) सकार (।।ऽ) गकारा (ऽ) तद्वृत्तं 'मत्ता'नाम । तत्रोदाहरणम्—

मगण भगण सगणः गु० मगण भगणः सगणः गु०

ऽ ऽ ऽ—ऽ । ।—। । ऽ—ऽ ऽ ऽ ऽ—ऽ । ।—। । ऽ—ऽ

स्वैरोल्ला–पैः(४),श्रुति–पटुपे–यैर् (६) गीतक्री–डा(४)सुर–तविशे–षैः (६)।

मगणः मगण सगण गु० मगण मगण सगण गु०

ऽ ऽ ऽ—ऽ । ।—। । ऽ—ऽ ऽ ऽ ऽ—ऽ । ।—। । ऽ—ऽ

वासागा–रे(४)कृत–सुरता–नां (६) मत्ता ना–री(४)रम–यति–चे–त (६) ॥

चतुर्भिः षड्भिश्च यतिरित्याम्नायः ॥

## उपस्थिता[4] त्जौ ज्गौ ॥ ६ । १४ ॥

यस्य पादे तकार[5] (ऽऽ।) जकारौ (।ऽ।), जकार (।ऽ।) गकारौ (ऽ) च तद्वृत्तं 'उपस्थिता' नाम । तत्रोदाहरणम्—

तगण जगण जगण गु० तगण जगण जगण गु०

ऽ ऽ ।—। ऽ ।—। ऽ ।—ऽ ऽ ऽ ।—। ऽ ।—ऽ । ।—ऽ

एषा(२)ज–गदेक–मनोह–रा (८),कन्या(२)क–नकोज्ज्व–लदीधि–तिः (८) ।

---

१. 'सक्तचित्ता' लि पुस्तके. २. उक्तादशाक्षरप्रस्तारस्यैकचत्वारिंशाधिकद्विशततमोऽयं भेदो ( २४१ ) 'मत्ता' नाम्ना प्रसिद्धः । ३. 'मगणभगणसगणगकारा' लि. पुस्तके । ४. उक्तदशाक्षरप्रस्तारस्य पञ्चषष्ट्यधिकत्रिशततमोऽयं भेदः (३६५) 'उपस्थिता' नाम्ना प्रसिद्धः । प्राकृतपिङ्गलादिषु **'संयुता' 'संयुतका'** इति नामान्तरम् । तल्लक्षणं यथा—

'जसु आइ हत्थ विआणिओ तह वे पओहर जाणिओ ।
गुरु अन्त पिङ्गलजम्पिओ सहि छन्द **संजुत** थप्पिओ ॥ २।९१ ॥'

५. 'तगणजगणौ जगणगकारौ च भवतः' इति लि. पुस्तके.

तगणः　जगणः　जगणः　गु　तगणः　जगणः　जगणः　गु

ऽ ऽ ।—। ऽ ।—। ऽ ।—ऽ　ऽ ऽ ।—। ऽ ।—। ऽ ।—ऽ

लक्ष्मी(२) रि—व दान—व—सूद—न(८),पुष्पै(२)र्नै—रनाथ—मुपस्थि—ता (८) ॥

अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः ॥

( त्रिष्टुभि )

## इन्द्रवज्रा तौ जगौ ग् ॥ ६ । १५ ॥

---

१ त्रिष्टुप्पादघटकीभूतानामेकादशाक्षराणां प्रस्तारे कृतेऽष्टचत्वारिंशदधिका द्विसहस्रभेदा (२०४८) आयन्ते तेषु द्वादश भेदा एवात्र निर्दिष्टाः परं प्राकृतपिङ्गल-च्छन्दःकौस्तुभप्रभृतिग्रन्थेषूपलभ्या बहवो भेदा प्रकाश्यन्ते यथा— २ उक्तैकादशाक्षरप्रस्तारस्य सप्तपञ्चाशदधिकत्रिशततमोऽयं (३५७) भेदः 'इन्द्रवज्रा' इति नाम्ना प्रसिद्धः । एतल्लक्षणं प्राकृतपिङ्गले यथा—

'दिज्जे तआराजुअला पएसु अन्ते णरेन्दो गुरुजुग्गसेसम् ।
जम्पे फणिन्दा धुअ 'इन्दवज्जा' मत्ता दहा अट्ठ समा सुसज्जा ॥' (२।११५)

चम्पुच्छन्दः—'णीलसरूअह एक करीजे तिण्णि भआगण सत्य भणीजे ।
सोलह मत्तह पाअ ठवीजे दुग्गुरु अन्तहि चम्पु कहीजे ॥'
प्रा० २।१०१

सुमुखीच्छन्दः—'दिअबर हार लहूजुअला वलअ परिट्ठिअ हत्यअला ।
पअ कउ चोदह जम्प अही कइवर जाणइ सो सुमुखी ॥'
प्रा० २।१०२

दमनकछन्दः—'दिअवरजुअ लहुजुअल पअ पअ पअलिअवलअम् ।
चउपद चउवसुकलअं दमणअ फणि भण ललिअम् ॥'
प्रा० २।१०९

मालतीच्छन्दः— कुन्तीपुत्ता पञ्चा दिण्णा जाणीआ
अन्ते कन्ता एक्का हारा माणीआ ।
पाआ पाआ मत्ता दिट्ठा बाईसा
मालत्तीच्छन्दा जम्पन्ता णाएसा ॥ प्रा० २।११२

अनुकूलाच्छन्दः—'स्यादनुकूला भतनगगाद्येत् ।
अस्या एवानुकूलाया 'मौक्तिकमाला' इति वृत्तरत्नाकरे 'श्रीः' इति वृत्तसारे च नामान्तरे

मोटनकच्छन्दः—'स्यान्मोटनकं तजजाश्च लगौ ॥'

भद्रिकाच्छन्दः— ननरलगुरुभिस्तु भद्रिका ॥' छन्दःकौस्तुभादौ

उपस्थिताच्छन्दः—'उपस्थितमिदं ज सताः गौ ग ॥' वृत्तसारप्रभृतिषु

यस्य पादे तकारौ (ऽऽ।॰ऽऽ।) जकार (।ऽ।) गकारौ (ऽ) गकार (ऽ) श्च, तद्वृत्तं 'इन्द्रवज्रा' नाम । तत्रोदाहरणम्—

तगण तगणः जगण गु॰ गु॰ तगण तगण जगण गु॰ गु॰
ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ ऽ ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ
यस्यां त्रि–षट्सप्त–ममक्ष–रं स्याद् ह्रस्वं सु–जङ्घे न–वमं च–त–द्वत् ।
तगण तगणः जगण गु॰ गु॰ तगण तगण जगण गु॰ गु॰
ऽ ऽ ॰ ।—ऽ । ।—। ऽ ऽ—ऽ—ऽ ऽ॰ऽ॰।—ऽ ऽ ॰ ।—। ऽ ।—ऽ—ऽ
गत्या वि–लक्षी कृ–तहंस–का–न्ते तामिन्द्र–वज्रां ब्रु–वते क–वी–न्द्राः ॥

अपि च—

तगण तगण जगण गु॰ गु॰ तगण तगणः जगण गु॰ गु॰
ऽ ऽ ।—ऽ ऽ ॰ ।—। ऽ ।—ऽ ऽ । ऽ ऽ—। ऽ ।—। ऽ ।—ऽ—ऽ
ये दुष्ट–दैत्या इ–ह भूमि–लो–के द्वेषं व्य–धुर्गो–द्वि–जदेव–स–ङ्घे ।
तगण तगण जगण गु॰ गु॰ तगण तगण जगण गु॰ गु॰
ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ ऽ ऽ ऽ ।—। ऽ ।—। ऽ ।—ऽ—ऽ
तानिन्द्र–वज्राद–पि दारु–णा–ङ्गान् व्याजीव–यद्य स–ततं न–म–स्ते ॥

तथा—

तगण तगण जगण गु॰ गु॰ तगण तगण जगण गु॰ गु॰
ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ
[2]गोब्राह्म–णस्त्री–व्र–तिभिर्वि–रु–द्ध मोहात्क–रोत्यल्प–मतिर्नृ– पो यः ।

---

१. 'तगणौ जगणौ गकारौ च भवत ' लि पुस्तके. २. 'गोब्राह्मणस्त्री' इत्यादि पद्यमेकमेवोदाहृतं लि. पुस्तके.

'शिखण्डितम्' इति नामान्तरम् **उपस्थित**च्छन्दसः छन्द कौस्तुभादौ.

**उपस्थिताच्छन्दः**—'तजौ जगौ गुरुणेय**मुपस्थिता** स्यात् ॥' छन्द कौस्तुभादौ

**सान्द्रपदच्छन्दः**—'**सान्द्रपदं** भतौ नगलघुभिश्च ॥' छन्दःकौस्तुभादौ.

**चन्द्रिकाच्छन्दः**—'ननगगलगैश्**चन्द्रिका** स्यात् ॥' वृत्तसारे.

**मेरुरूपाच्छन्दः**—'म सो गुरुयुग्मं **मेरुरूपा** ।' वृत्तसारे

**वन्दिताच्छन्दः**—'नरगजा गुरु**र्वन्दिता** मता ॥' वृत्तसारे

**धारावलिकाच्छन्दः**—'तो भो जलौ गुरु**र्धारावलिका** ॥' वृत्तसारे

**उपचित्रच्छन्दः**—**उपचित्र**मिदं सससा लगौ ॥' वृत्तरत्नाकरे.

**कुपुरुषजनिताच्छन्दः**—'**कुपुरुषजनिता** ननौ रगौ ग ॥' वृ॰ र॰ परि॰

**अनवसिताच्छन्दः**—'**अनवसिता** न्यौ भ्गौ गुरुरन्ते ॥' वृत्तरत्नाकरे.

**विध्वङ्कमालाच्छन्दः**—'**विध्वङ्कमाला** भवेत्तौ तगौ ग. ॥' वृ॰ र॰ परि॰

तगणः तगणः जगणः गु गु॰ तगणः तगणः जगणः गु गु

ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

तस्येन्द्र–वज्राभि–हतस्य पा–त क्षोणीध–रस्येव भयस्य–ध–स्यम् ॥

पादान्ते यतिः ॥

## उपेन्द्रवज्रा जतौ जगौ ग् ॥ ६ । १६ ॥

यस्य पादे जकार (।ऽ।) तकार (ऽऽ।) जकारा (।ऽ।) गकारौ (ऽ ऽ) च, तद्वृत्तम् 'उपेन्द्रवज्रा' नाम ॥ तत्रोदाहरणम्—

जगणः तगणः जगणः गु गु जगणः तगणः जगणः गु गु

। ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ । ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

भवन्त–स्त्वा' कुन्द–दसधि–यो ये नमन्ति लक्ष्मीस्त्व–नखेस–ने–ऽपि ।

जगणः तगणः जगणः गु गु जगणः तगणः जगणः गु गु

। ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ । ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

उपेन्द्र–वज्रापि–कठक–दा–स कथं ग—ताख्ये रि–पुदार–णा–याम् ॥

अत्र पादान्ते यतिः ॥

## आद्यन्तावुपजातयः ॥ ६ । १७ ॥

आद्यन्तौ'–इति अनन्तरोक्तौ इन्द्रवज्रोपेन्द्रवज्रयो पादावेह । तौ यदा विकल्पेन यथेष्ट भवतस्तदा 'उपजातयः' प्रस्तारवैचित्र्याच्चतुर्दशप्रकारा जायन्ते ॥ तत्रोदाहरणम्–

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु गु तगणः तगणः जगणः गु गु

ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

अत्रोप जातिर्वि–विधा वि–द्–ग्धै संयोज्य–ते तु व्य–वहार–का–ले ।

---

१ एकैकादशाक्षरप्रस्तारस्याष्टपञ्चाशदधिकत्रिशततमोऽयम् (३५८) भेद 'उपेन्द्रवज्रा' इति नाम्ना प्रसिद्धः । एतल्लक्षणं प्राकृतपिङ्गले यथा—

णरेन्द एक्का तअणा सुसज्जा पओहरा कण्णगणा मुणिज्जा ।

उविन्दवज्जा फणिरामदिट्ठा पढन्ति छेआ सुहवण्णसट्ठा ॥ (२।११७।)

२ जगणतगणौ जगणो गकारौ च भवत 'इति लि पुस्तके ३ 'पादाद्यन्तौ' लि पुस्तके ४ उपजातयश्च प्रस्तारगत्या चतुर्दश भवन्ति तासामलक्षणोदाहरणादीनि प्रदर्श्यन्ते यथा—(अत्रोदाहरणान्यग्रिमपृष्ठे द्रष्टव्यानि) ५. प्रस्तारवशात्' लि पुस्तके ६ प्रयोज्यते व्यवहारकाले' इति लि पुस्तके

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगण जगणः गु० गु० — जगणः तगणः जगणः गु० गु०

I S I—S S I—I S I—S—S — I S I—S S I—I S I—S—S

अत प्र–यत्नः प्र–थमं[1] वि–धे–यो नृपेण पुंरत्न[2]–परीक्ष–णा–य ॥

---

१ 'प्रथमो' लि. पुस्तके. २. 'परीक्षणायां' लि पुस्तके.

**'कीर्ति (१) वाणी (२) माला (३) शाला (४) हंसी (५) माया (६) जाया (७) बाला (८) आर्द्रा (९) भद्रा (१०) प्रेमा (११) रामा (१२) बुद्धि (१३) ऋद्धि (१४) स्तासां नामानि (प्रा० पि० सू० २।१२२)**

**(१) कीर्तिः—**

यथा—

'उपेन्द्रवज्रा' — 'इन्द्रवज्रा'

जगण तगण जगण गु० गु० — तगण तगण जगण गु० गु०

S S I—S S I—I S I—S—S — S S I—S S I—I S I—S—S

स मानु–षीं मेरु–सख पि–तृ–णां कन्या कु–लस्य स्थि–तये स्थि–ति–ज्ञः ।

'इन्द्रवज्रा' — 'इन्द्रवज्रा'

जगण तगण जगण गु० गु० — जगण तगण जगण गु० गु०

S S I—S S I—I S I—S—S — S S I—S S I—I S I—S—S

मेना मु–नीनाम–पि मान–नी–याम् आत्मानु–रूपा वि–धिनोप–ये–मे ॥

(कुमारसं० १।१८॥)

**(२) वाणी—**

यथा—

इन्द्रवज्रा — उपेन्द्रवज्रा

तगण तगण जगण गु० गु० — तगण तगण जगण गु० गु०

S S I—S S I—I S I—S—S — I S I—S S I—I S I—S—S

य पूर–यन्कीच–करन्ध्र–भा–गान् दरीमु–खोत्थेन–समीर–णे–न

इन्द्रवज्रा — इन्द्रवज्रा

तगण तगण जगण गु० गु० — तगण तगण जगण गु० गु०

S S I—S S I—I S I—S—S — S S I—S S I—I S I—S—S

उद्गास्य–तामिच्छ–ति किन्न–रा–णां तानप्र–दायित्व–मिवोप–ग–न्तुम् ॥

(कुमारसं० १।८॥)

(३) माला—



यथा—

उपेन्द्रवज्रा — उपेन्द्रवज्रा

जगणः तगणः जगणः गु गु । जगणः तगणः जगणः गु गु

। ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ  । ऽ । — ऽ ऽ । — । ऽ ऽ — — ऽ

कपोल–कण्डूः क–रिभिर्वि–ने–तुं विघट्टि–तानां स–रलद्रु–मा–णाम् ।

इन्द्रवज्रा — इन्द्रवज्रा

तगणः तगणः जगणः गु गु  तगणः तगण जगण गु गु

ऽ ऽ । — ऽ । — । ऽ । — ऽ — ऽ  ऽ ऽ । — ऽ । — । ऽ । — ऽ —

यत्र स्रु–तक्षीर–तया प्र–सू–तः सानूनि गन्धः सु–रभीक–रो–ति ॥

( कुमारसं० १।९ ॥ )

(४) शाला—

यथा—

इन्द्रवज्रा — इन्द्रवज्रा

तगण तगणः जगणः गु गु  तगण तगणः जगण गु गु

ऽ ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ  ऽ ऽ । — ऽ ऽ । — । ऽ । — ऽ —

उद्वेज–यत्यङ्गु–लिपार्ष्णि–भा–गान् मार्गे शि–लीभूत–हिमेऽपि य–त्र ।

उपेन्द्रवज्रा — इन्द्रवज्रा

जगण तगण जगणः गु गु  तगणः तगणः जगणः गु गु

। ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ  ऽ ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ

न दुर्व–हश्रोणि–पयोध–रा–र्ता भिन्दन्ति मन्दां ग–तिमश्व–मु–ख्यः ॥

( कुमारसं० १।११ ॥ )

(५) हसी—

यथा—

उपेन्द्रवज्रा — इन्द्रवज्रा

जगणः तगण जगणः गु गु  तगणः तगणः जगणः गु गु

। ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ  ऽ ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ

पदं तु–षारस्रु–तिधौत–र–क्तं यस्मिन्न–दृष्टापि हतद्वि–पा–नाम् ।

उपेन्द्रवज्रा | इन्द्रवज्रा

जगण तगण जगण गु० गु० तगण तगण जगण गु० गु०

। ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ ऽ ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

विदन्ति मार्गं न खर–न्ध्र–मु–क्तै–र्मुक्ताफ–लैः केस–रिणा कि–रा–ताः ॥

( कुमारस० १।६॥ )

'विपरीताख्यानिकी—' ( पिं० सू० ५।४८) इत्यनुसारेण 'विपरीताख्यानिः इति नामान्तर हंसीच्छन्दस ।

**(६) माया—**

यथा—

उपेन्द्रवज्रा | उपेन्द्रवज्रा

जगण तगणः जगण गु० गु० जगणः तगण जगण गु० गु०

। ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ । ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ

प्रसीद विश्राम्य–तु वीर–व–ज्रं शरैर्म–दीयैः क–तम. सु–रा–रि· ।

उपेन्द्रवज्रा | इन्द्रवज्रा

जगज तगण जगणः गु० गु० तगण तगण जगण गु० गु०

। ऽ ।–ऽ ऽ ।–। ऽ ।–ऽ–ऽ ऽ ऽ ।—ऽ ऽ ।–। ऽ ।–ऽ–ऽ

बिभेतु मोघीकृ–तबाहु–वीर्य स्त्रीभ्योऽपि कोपस्फु–रिताध–राभ्य ॥

( कुमारस० ३।९॥ )

**(७) जाया—**

यथा—

इन्द्रवज्रा | उपेन्द्रवज्रा

तगण तगण जगण गु० गु० जगण तगण जगण गु० गु०

ऽ ऽ।—ऽ ऽ ।—। ऽ ।—ऽ– ऽ । ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ– ऽ

कालक्र–मेणाथ तयो. प्र–वृ–त्ते स्वरूप–योग्ये सु–रतप्र–स–ङ्गे ।

उपेन्द्रवज्रा | इन्द्रवज्रा

जगण तगण जगण गु० गु० जगण तगण जगण गु० गु०

। ऽ ।—ऽ ऽ ।—। ऽ ।—ऽ—ऽ । ऽ ।—ऽ ऽ·।—। ऽ ।–ऽ—ऽ

मनोर–मं यौव–नमुद्व–ह–न्त्या गर्भोऽभ–वद्भूध–रराज–प–त्न्या ॥

( कुमारस० १।१९॥ )

(८) बाला—

| इन्द्रवज्रा | इन्द्रवज्रा |
| --- | --- |
| तगणः तगणः जगणः गु गु | तगणः तगणः जगणः गु० गु |
| यं सर्व–शैलाः प–रिकल्प्य व–त्सं | मेरौ स्थि–ते दोग्ध–रि दोह–द–क्षे । |

| इन्द्रवज्रा | इन्द्रवज्रा |
| --- | --- |
| तगणः तगणः जगणः गु गु | तगणः तगणः जगणः गु० गु |
| भास्वन्ति रत्नानि महौष–धी–श्च | पृथूप–दिष्टां दु–दुहुर्ध–रि–त्रीम् ॥ |

( कुमारसं० १।२ ॥ )

(९) आर्द्रा—

यथा—

| उपेन्द्रवज्रा | इन्द्रवज्रा |
| --- | --- |
| जगणः तगणः जगणः गु गु | तगणः तगणः जगणः गु गु |
| दिवाक– राद्रक्ष– ति यो गु–हा–सु | लीनं दि–वाभीत–मिवा–न्ध–का–रम् । |

| इन्द्रवज्रा | उपेन्द्रवज्रा |
| --- | --- |
| तगणः तगणः जगणः गु गु | जगणः तगणः जगणः गु गु |
| क्षुद्रेऽपि नूनं श– रणं प्र– प–न्ने | ममत्व–मुच्चैः शि– रसां स–ती–व ॥ |

( कुमारसं० १।१२॥ )

(१०) भद्रा—

यथा—

| इन्द्रवज्रा | उपेन्द्रवज्रा |
| --- | --- |
| तगणः तगणः जगणः गु गु | जगणः तगणः जगणः गु गु |
| अस्त्युत्त–रस्यां दि– शि देव–ता–त्मा | हिमाल–यो नाम नगाधि–रा–जः । |

यस्य पादे मगणतगणनगणयगणा ( ऽऽऽ, ऽऽ।, ।।।, ।ऽऽ ) यगणौ ( ।ऽऽ, ।ऽऽ ) च तद्वृत्तं 'कुसुमितलतावेल्लिता' नाम । पञ्चसु, षट्सु, सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः तगणः नगणः यगणः यगणः यगणः

ऽ ऽ ऽ—ऽ ऽ ।—। । । ।—। ऽ ऽ—। ऽ—।

धन्याना–मेता (५)कु–सुमित–लता(६)वे–ल्लितोत्कु–ल्लवृक्षाः (७)

---

घामत्ताहिण वाण धावइ सिक्खचमक्कुफडक्खभा
कह्हि पूरिस गेहमज्झमि एह सुन्दरि पेक्खभा ॥'

(प्रा पि सू २।२२९)

नन्दनच्छन्दः—

'नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम् ।'

षोडशाक्षरप्रस्तारे नराच', अत्र तु नाराच इत्यनयोर्भेदः ।

नाराचच्छन्दः—

'इह ननरचतुष्कसृष्टं तु नाराचमाचक्षते ।'

चित्रलेखाच्छन्दः—

'मन्दाक्रान्ता नयरचतुयुता कीर्तिता चित्रलेखा ।'

चित्रलेखाच्छन्दः—

वर्णैर्भैर्मैर्ननततमकैः कीर्तिता चित्रलेखेयम् ।'

शार्दूलललितच्छन्दः—

'म' सो ज सतसा दिनेशऋतुभिः शार्दूलललितम् ।'

(छन्दोमञ्जर्याम्)

हरिणप्लुतच्छन्दः—

'मारसौ जौ मरसंयुतौ करिबाणकैर्हरिणप्लुतम् ।'

महामालिकाच्छन्दः—

यदिह नयुगलं ततो वेदरेफैर्महामालिका ।'

अश्वगतिच्छन्दः—

'पञ्चभकारकृताश्वगतिर्यदि चान्तगुरुन्विता ।'

१ मकारतकारनकारा यकारत्रय च' क मु पुस्तके २ 'वृत्त' इति कि पुस्तके नास्ति ३ उक्ताश्लाद्वशाक्षरप्रस्तारस्याष्टशतसप्ताद्धिकसप्तत्रिंशत्सहस्रतमो (३६८५७) भेदः 'कुसुमितलतावेल्लिता' नाम्ना प्रसिद्धः ४ 'पञ्चषट्सप्तसु च यतिः' इति कि पुस्तके

मगण तगणः नगण यगण यगण यगणः

ऽ ऽ ऽ ऽ ऽ। — । । । — । ऽ ऽ — । ऽ ऽ — । ऽ ऽ

सोत्कण्ठं कूज(५)त्प –रभृत कैला(६)ला-पक्कोला–हलिन्य (७)।

मगणः तगणः नगण यगण यगणः यगणः

ऽ ऽ ऽ ऽ ऽ । — । । । — । ऽ ऽ — । ऽ ऽ — । ऽ ऽ

मध्वादौ माद्य(५)न्म–धुकर–कलोद्गी(६)–तझङ्का–ररम्या(७)

मगणः तगण नगणः यगणः यगण यगण

ऽ ऽ ऽ ऽ ऽ । — । । । — । ऽ ऽ — । ऽ ऽ — । ऽ ऽ

ग्रामान्त स्रोत (५)प–रिसर–भुवः(६)प्री–तिमुत्पा–दयन्ति (७) ॥

(अतिधृतौ)

## शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः । ७ । २१ ॥

सुधाच्छन्दः—

'सुधातकैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसा ।'

भ्रमरपदकच्छन्दः—

'भाद्रनना नसौ भ्रमरपदकमिदमभिहितम् ।'

शार्दूलच्छन्दः—

'शार्दूल वद मासषड्ऋयति म सौ जसौ रो मश्चेत् ।'

केशरच्छन्दः—

'अर्थाचाश्वैर्मभरनयुगैर्वृत्तं मतं केशरम् ।'

चलच्छन्दः—

'म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभि. स्वरै ।'

चन्द्रमालाच्छन्दः—

'ठइवि दिअवरजुअल मज्झ करअल करहिं
पुणवि दिअवरजुअल मज्झ करअल करहिं ।
सरसगण विमल जहि सुणि ठवइ मनगइ
विमलमइ उरअवइ चन्दमल कहइ सोइ ॥'

(प्रा पि. सू. २।२४२)

१. 'कुलालाय' इति लि. पुस्तके. २ अतिधृतिच्छन्द पादघटकीभूतानामूनविंशत्य-क्षराणा प्रस्तारे कृते लक्षपञ्चकम्, चतुर्विंशतिसहस्राणि, अष्टाशीत्यधिकद्विशतं भेदा जायन्ते तत्र शार्दूलविक्रीडितमन्तरा ग्रन्थान्तरेषूपलभ्यमाना भेदा यथा—

यस्य पादे मगणसगणौ ( SSS, IIS ) जगणसगणौ ( ISI, IIS ) तगणौ गकारश्च ( SSI, SSI, S ) तद्वृत्तं 'शार्दूलविक्रीडित' नाम । द्वादशभि सप्तभिश्च यतिः । तत्रोदाहरणम्—

मगणः　सगणः जगणः　सगणः　तगणः　तगणः गु

कम्बुग्रीव-कुमुद -मपाशु-शिखरं(१२) रत्नान्त-दीर्घेक्ष -ण (७)

---

धवलाच्छन्दः—

'करइ वसु भुम्मि जुवइ विमलमइ महिअले
　ठइअ ठइ रमणि सरसगण पअपअ पले।
दिअगण चउ धउपअहिं भम फणिवइ सही
　कमलगण सरसमण मुणहि धवलअ कही ॥'

(प्रा पि सू, २।२४४)

शम्भुच्छन्दः—

अव छोआणं मण ए च्छन्द मणमज्झे सुयक्ख संवुत्त
　सुपिअं अग्गे धरि हत्यो दिज्जसु कुन्तीपुत्त सज्जुत्तम् ।
गण अग्गे दिज्जसु एव वे सर अन्ते सत्ता हारा जं
　इअ बत्तीसा पअअ मत्ता मुणु छन्दो संभूलामेअम् ॥

(प्रा पि सू २।२४६)

मेघविस्फूर्जिताच्छन्दः—

'रसर्त्वश्वैर्म्यौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ।'

छायाच्छन्दः—

'मवेत्सैव च्छाया तयुगगयुता स्याग्रादशान्ते यदा ।'

सुरसाच्छन्दः—

'म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह सुरसाम् ।

फुल्लदामच्छन्दः—

'मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम् ।

(छन्दोमञ्जर्याम्)

१ 'मकार सकारौ जकार सकारौ तकारौ गकारश्च भवति तद्वृत्त' क मु पुस्तके
२ तदेकोनविंशत्यक्षरप्रस्तारस्य त्रिशतसप्तत्रिंशदुत्तरैकोनपञ्चाशत्सहस्राधिकैकलक्षतमो (१४९३३७) भेदः 'शार्दूलविक्रीडितम्' इति नाम्ना प्रसिद्ध

मगण सगण जगण सगण तगण तगण गु०

S S S—I I S—I S I—I I S S S I—S S I—S

शालप्रा–शुशरी–रमाय–तभुजं(१२)विस्तीर्ण–वक्ष:स्थ–लम् (७)।

मगण सगण जगण सगण तगण: तगण गु०

S S S—I I S—I S I—I I S S S I—S S I—S

कीलस्क–न्धमभु–द्धतं प–रिजने(१२)गम्भीर–सत्सस्व–रं(७)

मगण सगण जगण सगण: तगण: तगण गु०

S S S I I S—I S I—I I S S S I—S S I—S

राज्यश्री समुपै–ति वीर– पुरुषं(१२)शार्दूल–विक्रीडि–तम् (७) ॥

[इ]तानी कृति: प्रकृतिराकृतिर्विकृतिः संकृतिरतिकृति सत्कृतिश्चेति सप्त कृतयः क्रमेणै-
[वृ]द्ध्योदाह्रियन्ते—

( तत्र–कृतौ )

**[स]ुवदना म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्तवः । ७ । २२ ॥**

[यस्]य पादे मगणरगणभगणनगणयगणभगणलकारगकारा ( SSS, SIS, SII, III, SSS, I, S ) भवन्ति तद्वृत्तं 'सुवदना' नाम । सप्तसु सप्तसु षट्सु च यतिः ।

---

[प]ञ्चचामरच्छन्दः—

'नयुगललगुरु निरन्तरं यदा स पञ्चचामर ।'

[पुष्]पदामच्छन्दः—

'भूताश्वाश्वान्तं मतनसररगै कीर्तितं पुष्पदाम ।'

[बि]म्बच्छन्दः—

'वृत्तं बिम्बाख्यं शरमुनितुरगैम्लौं न्सौ ततौ चेद्गुरु ।'

[छ]ायाच्छन्दः—

'इयं च्छाया ख्याता ऋतुरसहयैर्यो मनसा भ्तौ गुरु ।'

[म]करन्दिकाच्छन्दः—

'रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ।'

१. 'कालस्कन्धसमुद्धतं परिजने गम्भीरसिंहस्वर' इति लि. पुस्तके.

[कृ]तिच्छन्द पादघटकीभूताना विंशतिवर्णाना प्रस्तारे कृते लक्षदशकम्, अष्टाचत्वा-[रिंश]त्सहस्राणि, षट्सप्तत्यधिकपञ्चशतं च भेदा जायन्ते तेषु सुवदनावृत्ताख्यौ भेदावत्र [निर्दि]ष्टौ । ग्रन्थान्तरेषु तु यथा—उक्तविंशत्यक्षरप्रस्तारस्य चतु शतसप्तदशोत्तराष्टस-[प्तति]सहस्राधिकद्विलक्षतमो ( २७८४१७ ) भेद **'सुवदना'** इति नाम्ना प्रसिद्धः. 'गकाराश्च तत्सुवदना नाम' लि. पुस्तके. तत्रोदाहरणम्—

मगणः रगणः भगणः नगणः नगणः भगणः ल गु

S S S—S I S—S I I I—I I I—I S S—S I I—I—S

या पीनो-द्गाढतु-ङ्ग(७)स्तन-जघन-घना(७)भो-गालस-ग-ति (६)

मगणः रगणः भगणः नगणः नगणः भगणः ल गु

S S S—S I S—S I I I—I I I—I S S—S I I—I—S

र्यस्याः क-र्णावत-सो(७)त्पल रुचिज-यिनी(७)श्री-र्ये च न-य-ने (६) ।

मगणः रगणः भगणः नगणः नगणः भगणः ल गु

S S S—S I S—S I I I—I I I—I S S—S I I—I—S

श्यामा सी-मन्तिनी-नां(७)तिल-कमिव भुवे(७)या च त्रिभु-व-ने (६)

मगणः रगणः भगणः नगणः नगणः भगणः ल गु

S S S—S I S—S I I I—I I I—I S S—S I I—I—S

सैप्राप्ता सांप्रतं मे(७)नय-नपथ-मसौ(७)दै-वात्सुख-द-ना(६) ॥

---

मणिमञ्जरीच्छन्दः—

'युगाश्वे स्याद्यभनयजजगा कीर्तिता मणिमञ्जरी ।'

समुद्रतताच्छन्दः—

गजाब्धितुरगैर्जसौ जसतमा गश्चेत्समुद्रतता ।'

(वृत्तरत्नाकरपरिशिष्टे)

गण्डकाच्छन्दः—

रगणा पञ्चतआ पुणो णरेन्द कन्तआ सुछन्दएण

हार एक विज्जही सुसद् पाअ किज्जही सुसण्णएण ।

गण्डआ गणेहु एसु वण्णसङ्गसङ्ख्खे फणिन्द गाउ

वीस मत्त पाअ पत्त हार वीअमागए सुसद् भाउ ॥'

(प्रा पि सू २।२५५)

मेघविस्फूर्जिताच्छन्दः—

रसाश्वाश्वै योमा नयुगगजठरा मेघविस्फूर्जिता चेत् ।'

गीतिकाच्छन्दः—

'सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका ।

अस्यैव छन्दस प्राकृतपिङ्गलसूत्रे 'गीता' इति नाम ।

शोभाच्छन्दः—

'रसैरश्वैरश्वैर्यमननततगैर्गैर्ने (?) शोभेयमुक्ता ।

## ग्लिति वृत्तम् ॥ ७।२३ ॥

यस्य पादे गकारलकारा क्रमेण भवन्ति तद् 'वृत्तं' नाम वृत्तम्। कृतिप्रकारेण यावद्भिरेव विंशत्यक्षराणि पूर्यन्ते तावतां ग्ला ग्रहणम्। तत्रोदाहरणम्—

(१)(२) (३)(४) (५)(६)(७)(८) (९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)
ऽ। ऽ। ऽ।ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ।
जन्तु मात्र दुखकारि कर्म निर्मितं भवत्यनर्थहेतु
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)
ऽ।ऽ।ऽ।ऽ।ऽ। ऽ। ऽ। ऽ। ऽ। ऽ।
तेन सर्वमात्मतुल्यमीक्षमाण उत्तम सुखं लभस्व।
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)
ऽ।ऽ।ऽ।ऽ।ऽ। ऽ। ऽ। ऽ। ऽ। ऽ।
विद्धि बुद्धिपूर्वकं ममोपदेशवाक्यमेतदादरेण
(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)
ऽ।ऽ।ऽ।ऽ।ऽ। ऽ। ऽ। ऽ। ऽ। ऽ।
वृत्तमेतदुत्तमं महाकुलप्रसूतजन्मना हिताय ॥

अत्र पादान्ते यतिः।

(प्रकृतौ)

## स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः ॥ ७।२४ ॥

---

**नरेन्द्रच्छन्दः—**

'आइहि जत्थ पाअगण पअलिअ जोहल अन्त ठवीजे
काहल सद्द गन्ध एम मुणिगण कङ्कण जाहँ करीजे।
सद्दइ एक्क तत्थ चल णरवइ पूरहु सङ्क सुभव्वा
चामरजुग्ग अन्त जहि पअलिअ एहु णरेन्दउ कव्वा ॥'

प्रा. पि. सू. २।२६३.

**सरसीच्छन्दः—**

'नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः ॥'

१. 'वृत्तं वृत्तं नाम' लि. पुस्तके उक्तविंशत्यक्षरप्रस्तारस्यैकपञ्चाशदुत्तरनवनवतिसहस्राधिकषड्लक्षतमो(६९९०५१) भेदः 'वृत्तम्' इति नाम्ना प्रसिद्धः. २. 'तावतामेव ला ग्रहणम्। विंशत्या गुरुभिर्लघुभिश्च' लि. पुस्तके. ३. 'ईक्षणमुत्तमं' लि. पुस्तके. ४. 'वृत्तमुत्तमं महाकुलप्रसूतजन्मना सदा हिताय' लि. पुस्तके. ५. 'अत्र' इति लि. पुस्तके नास्ति. ६ प्रकृतिच्छन्दःपादघटकीभूतानामेकविंशत्यक्षराणां प्रस्तारे कृते लक्षविंशतिः, सप्तनवतिसहस्राणि, एकशतद्विपञ्चाशच्च (२०९७१५२) भेदा जायन्ते। तेषु येऽत्र नोक्ताः परत्रापि च स्वल्पा एवोक्तास्तेऽत्र समुद्धृत्य लिख्यन्ते.

यस्य पादे मगणरगणभगणनगणास्त्रयश्च यगणा (SSS, SIS SII, III, ISS, ISS, ISS) स्यात् 'स्रग्धरा' नाम वृत्तम् । सप्तसु सप्तसु सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः　रगणः　भगणः　नगणः　यगणः　यगणः　यगणः
S S S　S I S　S I I　I I I　I S S　I S S　I S S

रेखा–भ्रू सुभ्रद्–न्त(७)द्युति–हसित–शर(७)च्च–न्द्रिका सा–स्मूर्ति (७)–

मगणः　रगणः　भगणः　नगणः　यगणः　यगणः　यगणः
S S S　S I S　S I I　I I I　I S S　I S S　I S S

माद्यन्मा–तङ्गली–ला(७)गति–रतिवि–पुला(७)भो–गतुङ्ग–स्तनी या (७) ।

मगणः　रगणः　भगणः　नगणः　यगणः　यगणः　यगणः
S S S　S I S　S I I　I I I　I S S　I S S　I S S

रम्भास्त–म्भोपमो–रु(७)स्तलि–मलिन–घन(७)स्नि–ग्धधम्मि–ल्लहस्ता (७)

मगणः　रगणः　भगणः　नगणः　यगणः　यगणः　यगणः
S S S　S I S　S I I　I I I　I S S　I S S　I S S

बिम्बोष्ठी रैक्ष्य–ण्ठी(७)दिश–तु रति–सुख(७)स्र–ग्धरा सु–न्दरीयम् (७) ॥

(ओहलो)

# मभ्रकं भ्रौ न्रौ न्गौ दिगादित्याः ॥ ७ । २५ ॥

---

सलिलनिधिच्छन्दः—

'सलिलनिधिर्भवेदिह नयौ मगणो जगणास्त्रयश्च र ।

अन्येषां मते चित्रकमिति संज्ञितमेतत् ।

हंसीच्छन्दः—

गेतामन्दा उग्गो चन्दा धवलच्चमरसमसिअकरविन्दा

उग्गे तारा तेआ हारा विअसु कमलवण परिमलकन्दा ।

भासा कासा सव्वा महुरपवण लहलहिअ करन्ता

हसा सद्दू फुल्लाव धू सरअ समअ सहि हिअअ हरन्ता ॥'

(प्रा पिङ्गलसूत्रे २।२६८)

१ मकाररेफभकारनकारास्त्रयश्च यकारा भवन्ति तद्वृत्तं' क मु पुस्तके　२ उक्ते कर्निशत्यक्षरप्रस्तारस्य द्विसहस्रनवशतत्रिनवत्युत्तरत्रिलक्षतमो (३ २९९३) भेदा 'स्रग्धरा' इति नाम्ना प्रसिद्धः,　३ 'चारुकण्ठी' ख पुस्तके　४ आकृतिच्छन्दः' - पादघटकीभूतानां द्वाविंशत्यक्षराणां प्रस्तारे कृते (४१९४३०४) भेदा जायन्ते तेष्वत्र ये नोक्ताः परत्र नोक्ताश्च तत्र आकृष्य लिख्यन्ते

यस्य पादे भगणरगणौ, (ऽ।।, ऽ।ऽ) नगणरगणौ, (।।।, ऽ।ऽ) पुनर्नगणरगणौ (।।।, ऽ।ऽ) च भवतस्तद्वृत्तं 'मद्रकम्' नाम। दशभिर्द्वादशभिश्च यतिः। तत्रोदाहरणम्—

भगण रगणः नगण रगण सगणः सगण सगणः गु०

ऽ।।—ऽ।ऽ। ।।।—ऽ।ऽ—।।ऽ—।।ऽ—।।।—ऽ

मद्रक-गीतिभिः सकृद-पि(१०)स्तुव-न्ति भवा-य भव-न्तमभ-वं (१२)

भगणः रगण नगण रगण नगणः रगणः नगणः गु०

ऽ।।—ऽ।ऽ—।।।—ऽ।ऽ—।।।ऽ।ऽ—।।।—ऽ

भक्तिभ-रावन-म्रशिर-सः(१०)प्रण-म्य तव पादयो सुकृति-नः (१२) ।

भगणः रगणः नगण रगण नगणः रगण नगण गु०

ऽ।।—ऽ।ऽ—।।।—ऽ।ऽ—।।।—ऽ।ऽ—।।।—ऽ

ते पर-मेश्वर-स्य पद-वी(१०)मवा-प्य सुख-माप्नुव-न्ति विपु-लं (१२)

भगणः रगणः नगणः रगण नगणः रगण नगण गु०

ऽ।।—ऽ।ऽ—।।।—ऽ।ऽ—।।।—ऽ।ऽ—।।।—ऽ

मर्त्यभु-वं स्पृश-न्ति न पु-न(१०)र्मनो-हरसु-राङ्गना-परिवृ-ता· (१२) ॥

(विकृतौ)

## अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग्रुद्रादित्याः ॥ ७ । २६ ॥

---

**मदिराच्छन्दः—**

'सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा ।'

**सुन्दरीच्छन्दः—**

'जहिँ आइहि हत्थो करअल तत्थो पाअ लहुजुअ वङ्क तिआ
ठवि सल्ल पहिल्लौ चमरहिहिल्लौ सल्लजुअ पुणु वङ्कठिआ ।
पअअन्तहि हत्थागण पभणिज्जे तेइस वण्ण पमाण किआ
ऍहु मत्तइ पाआ पइ पभणिज्जे वण्णहि सुन्दरिआ भणिआ ॥' (प्रा. पि. सू. २।२७१)

**अद्रितनयाच्छन्दः—**

'नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया ।'

१. 'भकाररेफौ नकाररेफौ पुनर्नकाररेफौ नकारगकारौ च भवतस्तद्वृत्तं' क मु पुस्तके. २. उक्तद्वाविंशत्यक्षरप्रस्तारस्य (१९३०७११) तमो भेदः 'मद्रकम्' इति नाम्ना प्रसिद्ध ३. अस्य छन्दस त्र्यशीतिलक्षाणि, अष्टाशीतिसहस्राणि, अष्टोत्तराणि पट्शतानि (८३८८६०८) च भेदा भवन्ति । तेषु भेदद्वयमेवात्र निर्दिष्टम् । परत्र च येऽधिका भेदास्ते यथा—

यस्य पादे नगणजगणौ (।।।, ।ऽ।) भगणजगणौ (ऽ।।, ।ऽ।) पुनर्भगणजगणौ (ऽ।।, ।ऽ।) भगणलकारौ (ऽ।।, ।,) गकार (ऽ) श्च तद्वृत्तम् 'अश्वललितम्' नाम । एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम्—

पवन-विधूत-वीचि-च-पल(११)वि-लोकय-ति जीवि-त तनु-भृ-तां(१२)

वपुर-पि हीय-मान म-निशं(११)ज-रावनि-तया व-शीकृत-मि-दम्(१२)

सपदि निपीड-न व्यति-करं(११)य-मादिव नराधि-पामर-प-शुः(१२) ।

परव-निताम-वेक्ष्य कु-रुषे(११)त-थापि ह-तबुद्धि-रश्वल-लि-तम्(१२)

**मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ ॥ ७ । २७ ॥**

यस्य पादे मगणौ, (ऽऽऽ, ऽऽऽ,) तगणो, (ऽऽ।) नगणाश्चत्वारो (।।।, ।।।, ।।।, ।।।) लकारगकारौ (।, ऽ) च तद्वृत्तं 'मत्ताक्रीडा' नाम । अष्टभिः पञ्चदशभिश्च यतिः । तत्रोदाहरणम्—

हर्षं म-न्दं पीत्वा नारी(८)स्ख-लितग-तिरति-शयर-सिकहृ-द-या(१५)

मत्ताक्री-डा खेले-रङ्गे(८)मु-दमखि-लविट-जनम-नसि कु-रु-ते(१५) ।

---

१ नकारजकारौ भकारजकारौ पुनर्भकारजकारौ भकारलकारौ गकारश्च तद्वृत्तं अश्वललितं नाम क मु पुस्तके　२ 'भगणो लकारगकारौ च मदललितम्' ख पुस्तके　३ षड्विंशत्यक्षरप्रस्तारस्य (२८१२८४८) तमो भेदः 'अश्वललितम्' इति नाम्ना प्रसिद्धः　४ मकारौ तकारनकारचतुष्कं लकारगकारौ च' क मु पुस्तके　५ त्रयोविंशत्यक्षरप्रस्तारस्य (४२१४०४९) तमो भेदः 'मत्ताक्रीडा' नाम्ना ख्यातः।

मगण मगणः तगणः नगणः नगणः नगणः नगण ल० गु०

ऽ ऽ ऽ–ऽ ऽ ऽ—ऽ ऽ ।—। । । –। । । –। । । –। । । –।—ऽ

वीतक्री–डाश्लीला–लापै[1] (८)श्र–वणसु–खसुभ–ग–सुल–लितव–च–ना(१५)

मगणः मगण तगणः नगण नगणः नगण नगण ल० गु०

ऽ ऽ ऽ–ऽ ऽ ऽ–ऽ ऽ ।—। । । –। । । –। । । –। । ।—।–ऽ

नृत्यैर्गी–तैर्भ्रूवि–क्षेपैः[2](८)क–लमणि–त–विवि–धविह–गकुल–रु–तै (१५) ॥

(सङ्कृतौ[3])

## तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः ॥ ७ ॥ २८ ॥

यस्य पादे भगणतगणौ,[4] (ऽ।।, ऽऽ।) नगणसगणौ, (।।।, ।।ऽ) भगणौ (ऽ।। ऽ।।) नगणयगणौ (।।।, ।ऽऽ) च तद्वृत्तं 'तन्वी'[5] नाम। पञ्चसु, सप्तसु, द्वादशसु च यतिः। तत्रोदाहरणम्—

---

दुर्मिलाच्छन्दः—

'दुमिलाइ पआसहु मण्ण विसेसहु दीस फणीन्दह चारुगणा
भणु मत्त वतीसह जाणिअ सेसह अट्ठइ ठाम ठई सगणा।
गण अण्ण ण किज्जइ कित्ति मुणिज्जइ लग्गइ दोस अणेअ जही
कहि तिण्णि विरामहि पाअह ता दइ अट्ठचउद्दह मत्त सही ॥'

(प्रा. पि. सू. २।२७७.)

१ 'वा(वी?)त व्रीडाश्लीलोल्लापैः' लि. पुस्तके. २. 'नृत्यैर्गीतैर्भ्रूविक्षेपैः' क. मु. पुस्तके ३. अत्रापि प्रस्तारे चतुर्विंशत्यक्षरस्यैका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि षोडशोत्तर शतद्वयं च भेदाः। तेषु प्राकृतपिङ्गलसूत्रे—

किरीटच्छन्दः—

ठवहु आइहि सक्कगणा तह सल्ल विसज्जहु वे वि तहापर
णेउर सद्दजुअ तह णेउरए परिवारह छक्कगणा कर।
काहलजुग्गल अन्त करिज्जसु एपरि चौविस वण्ण पआसहु
वत्तिस मत्त पअप्पअलेखउ अट्ठ अआर किरीट विसेसहु ॥

(प्रा. पि. सू. २।२७८)

४ 'भकारतकारनकारसकारा भकारौ नकारयकारौ च' क. मु. पुस्तके. ५. उक्तचतुर्विंशत्यक्षरप्रस्तारस्य (४१५५३६७) तमो भेदः 'तन्वी' इति नाम्ना प्रसिद्धः.

मगणा तगणा नगणा समगा भगणा मगणा नगणा यगणा

ऽ ।।—ऽ ऽ ।—। । ।—। । ऽ ऽ । ।—ऽ ।—। । ।—। ऽ ऽ

मन्मथु—सी सु(५)न्द—रवन—वचना(७) कुन्दस—मानशि—खरद—शना या (१२)

भगणा तगणा नगणा सगणा भगणा भगणा नगणा यगणा

ऽ । ।—ऽ ऽ ।—। । । ।—। ।ऽ ऽ । ।—ऽ । ।—। । ।—। ऽ ऽ

निष्कल—शीला(५)मु—निग्रुख—वचना(७)न्त्रक्कु—रत—रञ्जन—यनान्ता(१२) ।

भगणा तगणा नगणा सगणा भगणा भगणा नगणा यगणा

ऽ । ।—ऽ ऽ ।—। । ।—। । ऽ ऽ । ।—ऽ । ।—। । ।—। ऽ ऽ

निर्मुख—पीनो(५)म—तकुम—कलशा(७)मतग—जेन्द्रल—लितग—मना च(१२)

भगणा तगणा नगणा सगणा भगणा भगणा नगणा यगणा

ऽ । ।—ऽ ऽ ।—। । । । ।—। । ऽ ऽ । ।—ऽ । ।—। । ।—। ऽ ऽ

निर्भर—लीला(५)नि—भुवन—सिर्भये(७) भुवन—रेन्द्र म—चतु त—व तन्वी(१२) ॥

(अभिकृती)

क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः । ७ । २९ ॥

यस्य पादे भगणमगणौ, (ऽ।।, ऽऽऽ) सगणभगणौ (।।ऽ, ऽ।।) नगणाश्चत्वारो (।।।, ।।।, ।।।, ।।।) गकार(ऽ)श्च तद्वृत्त 'क्रौञ्चपदा' नाम। पञ्चभिः पञ्चभि, अष्टभि, सप्तभिश्च यति । तत्रोदाहरणम्—

भगणा मगणा सगणा भगणा

ऽ । । — ऽ ऽ — ऽ —। । ऽ — ऽ — । ।

या कपि—लाक्षी(५)पि—ङ्गलके—शी(५)कलि—

नगण नगणा नगणा नगणा गु

। । । । । । —। । । । । । —ऽ

रुचिर—नुदिन(८)—मनुन—यकठि—ना (७) ।

---

१ 'शिखरदशनाभा' कि पुस्तके २ तरलनमना च' कि पुस्तके ३ त्रिभु वनविपये' क ग्र पुस्तके ४ 'अतिकृतौ' इत्यपि पाठ। अत्रापि प्रस्तारपक्षा पञ्चविंशत्यक्षरस्य कोटित्रयम्, पञ्चत्रिंशल्लक्षाणि षट्पञ्चाशत्सहस्राणि, द्वात्रिंशदुत्तराणि चतुःशतानि च (३३५५४४३२) भेदा । तेषु सर्वेष्वपि ग्रन्थेषु वृत्तमेकमेवोक्तम् । ५ भकारमकारसकारभकारा नकाराश्च चत्वारो गकारश्च भवति क ग्र पुस्तके ६ तत्कपञ्चविंशत्यक्षरप्रस्तारस्य १६८७४४४७ तमो भेद 'क्रौञ्चपदा' इतिनाम्ना प्रसिद्धः

भगण मगण सगणः भगणः

ऽ। । —ऽ ऽ — ऽ । । ऽ ऽ— । ।

दीर्घत–राभि·(५)स्थू–लशिरा–भि·(५)परि–

नगण नगण नगण नगण गु०

। । । । । । —। । । । । । ऽ

वृतव–पुरति(८)–शयकु–टिलग–तिः (७) ॥

भगण मगण· सगण भगण

ऽ· । । ऽ ऽ— ऽ । । ऽ ऽ— । ।

आयत–जङ्घा (५)नि–म्नकपो–ला(५)लघु–

नगण नगणः नगणः नगण गु०

। । ।–। । ।— । । । । । । ऽ

तरकु–चयुग(८)–परिचि–तहृद–या (७) ।

भगण मगणः सगणः भगण

ऽ । । ऽ ऽ ऽ–। । ऽ ऽ — । ।

सा परि–हार्या(५)कौ–श्चपदा स्त्री(५) भुव–

नगण नगण नगण नगण गु०

। । ।—। । ।— । । । –। । । –ऽ

मिह नि–रवधि(८) सुखम–भिलष–ता (७) ॥

( उत्कृतौ[3] )

## भुजङ्गविजृम्भितं मौ तौ नौ रसौ लगौ वसुरुद्रऋषयः ॥७।२०॥

यस्य पादे मगणौ ( ऽऽऽ, ऽऽऽ ) तगणनगणौ ( ऽऽ।, ।।। ) नगणौ ( ।।।, ।।। ) रगणसगणौ ( ऽ।ऽ, ।।ऽ ) लकारगकारौ ( ।, ऽ ) च तद्वृत्तं 'भुजङ्गविजृम्भितम्' नाम । अष्टभिरेकादशभि· सप्तभिश्च यतिः । तत्रोदाहरणम्—

मगण मगण तगण नगण

ऽ ऽऽ–ऽ ऽ ऽ —ऽ ऽ ।—। । ।—

ये संन–द्धानेका—नीकै(८)र्न–रतुर–

नगण नगण रगणः सगण ल० गु०

। । ।–। । ।—। ऽ। –। । ऽ–। –ऽ

गकरि–परिवृ– तै.(११)समं–तव श–त्र–वो (७)

१. अत्रापि प्रस्तारगत्या रसलोचनवर्णस्य कोटिषट्कम्, एकसप्ततिलक्षाणि वसुसहस्राणि, चतु षष्ट्युत्तराण्यष्टौ शतानि च ( ६७१०८८६४ ) भेदाः. २. एतत्सूत्रं सोदाहरणं लिखितपुस्तके लेखकप्रमादाद् नास्ति. ३. तेषु १३८३४७४९ तमो भेदः 'भुजङ्गविजृम्भितम्' इति नाम्ना प्रसिद्ध .

मगण मगणः तगण नगण
ऽ ऽ ऽ –ऽ ऽ ऽ—ऽ ऽ ।—। । ।–
पाण्डुच्छा–यं क्षामं वक्त्रं(८)म–दजन–

नगण नगण रगण सगणः ल० गु०
। ।। –। ।।—ऽ । ऽ —। । ऽ—।–ऽ
नि रह–सि सर –सा(११)करो– षि न सं– क–थां[1] (७)

मगण नगणः नगणः नगणः
ऽ ऽऽ । ।। ऽ ऽ ।—। । ।—
को नामा–यं रम्यो व्याधि(८)स्त–व कथ–

नगणः नगण रगण सगणः ल० गु०
। ।।—। । ।—ऽ । ऽ—। । ऽ—।–ऽ
य सुत–नु किमि–द(११)न ख-ल्वसि ना–तु–रा (७)॥

## अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥७।३१॥

यस्य पादे मगणः[2], (ऽऽऽ) नगणाः षट्, (।।।, ।।।, ।।।, ।।।, ।।।, ।।।,) सगणो, (।।ऽ) गकारौ (ऽ, ऽ) तद्वृत्तं 'अपवाहको'[3] नाम। नवसु, षट्सु, षट्सु, पञ्चसु च यतिः। तत्रोदाहरणम्—

मगणः नगण नगणः नगण नगण
ऽ ऽ ऽ । ।—। । । —। । ।—। । ।
श्रीकण्ठं त्रिपुर–दहन(९)–ममृत–किरण(६)–

नगणः नगण सगण गु० गु०
। । ।–। । । —। । ऽ—ऽ–ऽ
शकल[4]–ललित(६)–शिरस रु–द्रं (५)

मगणः नगण नगणः नगण नगण
ऽऽऽ । । ।–। । । । । ।—। । ।
भूतेशं हतमु–निमख(९)–मखिल–भुवन (६)–

नगणः नगणः सगणः गु० गु०
। । ।–। । ।— । । ऽ—ऽ –ऽ
नमित–चरण(६)–युगमी–शा–नम् (५)।

---

१. 'सत्कथा' लि. पुस्तके. २. 'मकार षण्नकाराः सकारो गकारौ च तद्वृत्तं' क. मु. पुस्तके ३. तेष्वेव (८३८८६०१) तमो भेदः 'अपवाहकः' इति ख्यातिमाससाद. ४. 'सकलकलितशिरस' क. मु. पुस्तके, 'सुकलकलितशिरसं' लि. पुस्तके.

नगणः नगणः भगणः नगणः नगणः

सचर वृषभ–गमन(१)महिप–तिभृतं(१)–

नगणः नगणः नगणः गु गु

मलय–रुचिर(१)सरला–रा–ध्य (५)

नगणः भगणः नगणः नगणः नगणः

व मन्दे भयभ– यभिद(१)–मभिम–सफल (१)–

नगणः नगणः नगणः गु गु

चितर–गगुद(१)–मुमया पु–च्छम् (५) ॥

इति वृत्तयः समाप्ताः ।

इदानीं दण्डकजातयः कथ्यन्ते—

## दण्डको नौ रः ॥ ७ । ३२ ॥

यत्र पादे द्वौ नगणौ ( ।।।, ।।। ) रगणाश्च ( ऽ।ऽ ) सप्त भवन्ति दण्डको नाम सः । उत्कृते पङ्क्तिचत्वक्षरायाः समनन्तरं दण्डकस्य पाठात्सप्तविंशत्यक्षरत्वमेव युक्तम् । सर्वेषां छन्दसामेकैकाक्षरसङ्ख्या प्रवृत्तेः । इत ऊर्ध्वं पुनरेकैकसङ्ख्या प्रस्तारः । दण्डको नौ र इति श्रवणात् । तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः रगणः

इह हि भवति दण्डका–रण्यदे– शे स्थिति

रगणः रगणः रगणः रगणः

पुण्यभा–जां मुनी– नां मनो–हारिणी

नगणः नगणः रगणः रगणः रगणः

त्रिदश–विजयि–वीय –र–र्यौरघ–मीवल–

---

१ महिपतिभृत' लि पुस्तके　२ 'इति' इति क. मु पुस्तके नास्ति　३ 'नवरौ रेफाश्च सप्त भवन्ति' क मु पुस्तके　४. लिखितपुस्तके 'च' इति नास्ति. ५. 'वीय–प्रसाद' क. मु पुस्तके, 'वीर्यदीप्त' लि पुस्तके.

रगणः रगणः रगण रगण

ऽ । ऽ—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

क्ष्मीविरा—मेण रा—मेण स—सेविते[1] ।

नगण नगणः रगण रगणः रगणः

। । ।—। । ।—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

जनक—यजन—भूमिस—भूतसी[2]—मन्तिनी—

रगणः रगणः रगण रगणः

ऽ । ऽ—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

सीमसी—तापद—स्पर्शपू—ताश्रमे

नगण नगण रगण रगणः रगणः

। । ।—। । ।—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

भुवन—नमित—पादप—द्माभिधा—नाम्बिका

रगणः रगणः रगण रगणः

ऽ । ऽ—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

तीर्थया—त्रा—गता—नेकसि—द्धाकुले ॥

अत्र पादान्ते यतिः ।

## प्रथमश्चण्डवृष्टिप्रपातः । ७ । ३३ ॥

यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स चण्डवृष्टिप्रपातो नाम[3] । पूर्वमेवोदाहरणम् ।

## अन्यत्र रातमाण्डव्याभ्याम् । ७ । ३४ ॥

रातमाण्डव्याभ्या ऋषिभ्यामन्यत्रास्याभिधानमेतदेव ताभ्यां पुनरन्यैव संज्ञा कृतास्य[4] वृत्तस्य ॥ रातमाण्डव्यग्रहणं पूजार्थम् ।

## शेषः प्रचित इति । ७ । ३५ ॥

इतश्चण्डवृष्टिप्रपातादूर्ध्वं दण्डकप्रस्तारः[5] प्रचित इति संज्ञां लभते । पूर्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरुक्ता । इदानीं तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः । तत्रोदाहरणम्—

नगणः नगण रगणः रगणः रगणः

। । ।—। । ।—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

प्रथम—कथित—दण्डक—श्चण्डवृ—ष्टिप्रपा—

---

१. 'ससेव्यते' लि पुस्तके. २. 'सभूतिसीमन्तिनी लि. पुस्तके. ३. 'नाम भवति लि. पुस्तके. ४. लिखितपुस्तके 'अस्य वृत्तस्य । रातमाण्डव्यग्रहणं पूजार्थं' इति नास्ति. ५. 'शेषो दण्डकप्रस्तार ' लि पुस्तके.

रगणः　रगणः　रगणः　रगणः　रगणः

ऽ । ऽ—ऽ । ऽ ऽ । —ऽ । ऽ—ऽ । ऽ

त्वाभिधा—नो मुनेः पिङ्गला—चार्यना—म्ना मतः

नगणः　नगणः　रगणः　रगणः　रगणः

। । ।—। । ।—ऽ । ऽ ऽ । ऽ—ऽ । ऽ

प्रचित—इति त—त परं दण्डका— नामियं

रगणः　रगणः　रगणः　रगणः　रगणः

ऽ । ऽ—ऽ । —ऽ । ऽ—　। ऽ—ऽ ।

जातिरे—कैकरे—फाभिवृ—द्ध्या यथे—ष्टं भवेत् ।

नगणः　नगणः　रगणः　रगणः　रगणः

। । ।—। । ।—ऽ । ऽ ऽ । ऽ—ऽ । ऽ

स्वरुचि—रचित— संज्ञया सद्भि—रेषो—

रगणः　रगणः　रगणः　रगणः　रगणः

ऽ । ऽ ऽ । ऽ—ऽ । ऽ—। ऽ—ऽ । ऽ

र्यैः पुनः काव्यम— न्येऽपि कु— र्वन्तु वा— गीश्वराः

नगणः　नगणः　रगणः　रगणः　रगणः

। । । । । ।—ऽ । ऽ—ऽ । ऽ—ऽ । ऽ

भवति येषि स—मासर्व—स्याक्षरे— यैत्र पा—

रगणः　रगणः　रगणः　रगणः　रगणः

ऽ । ऽ—ऽ । ऽ ऽ । ऽ ऽ । —ऽ । ऽ

दस्यत— स्या ततो दण्डकः पूज्यते—ऽसौ जनैः ॥

अत्र पादान्ते यतिः ।

इति दण्डकाः समाप्ताः ।

इति श्रीमद्हलायुधभट्टविरचितायां पिङ्गलछन्दोवृत्तौ सप्तमोऽध्यायः ।

---

## अत्रानुक्तं गाथा । ८ ॥ १ ॥

अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दः प्रयोगे च दृश्यते तद्गाथेति मन्तव्यम् ।

---

१ 'भवन्ति' इति ख पुस्तके　२ 'कृतायां पैङ्गलछन्दोवृत्तौ' ख पुस्तके.
३ प्रयोगे दृश्यते' ख पुस्तके

(तत्र-त्रिष्टुभि)

**कुड्मलदन्ती भ्तौ नृगौ गिन्द्रियरसाः ॥ ८ । २ ॥**

यस्य पादे भगणतगणौ (ऽ॥, ऽऽ।) नगणो (॥।) गकारौ (ऽ, ऽ) च भवत-स्तद्वृत्तं 'कुड्मलदन्ती' नाम । पञ्चभिः षड्भिश्च यतिः ।

भगणः तगण नगण गु० गु०

ऽ । ।-ऽ ऽ ।-। । ।-ऽ-ऽ

कुड्मल-दन्ती(५)वि-कटनि-त-म्बा (६)

भगण तगण नगणः गु० गु०

ऽ । ।-ऽ ऽ ।-। । ।-ऽ-ऽ

किंनर-कण्ठी(५)ल- घुतर-म-ध्या (६) ।

भगण तगण नगण गु० गु०

ऽ । ।-ऽ ऽ ।-। । ।-ऽ-ऽ

बिम्बफ-लोष्ठी(५) मृ-गशिशु-ने-त्रा (६)

भगण तगण नगण गु० गु०

ऽ । ।-ऽ ऽ ।-। । । ऽ-ऽ

मित्र भ- वन्तं(५)सु-खयतु का-न्ता (६) ॥

(जगत्याम्)

**वरतनुर्नजौ ज्रौ षड्रसाः ॥ ८ । ३ ॥**

यस्य पादे नगणजगणौ (॥।, ।ऽ।) जगणरगणौ (।ऽ।, ऽ।ऽ) च तद्वृत्तं 'वर-तनु-'र्नाम । षड्भिः षड्भिश्च यतिः । तत्रोदाहरणम्—

नगण जगण जगण रगणः

। । ।-। ऽ । । ऽ ।-ऽ । ऽ

अयि वि-जहीहि(६) दृढोप-गूहन (६)

नगण जगण जगणः रगण

। । ।-। ऽ । -। ऽ ।-ऽ । ऽ

त्यज न-वसङ्ग(६)-मभीरु वल्लभम् (६) ।

नगण जगणः जगणः रगणः

। । ।-। ऽ । -। ऽ । ऽ । ऽ

अरुण-करोद्ग(६)-म एष वर्तते (६)

---

1. 'नगणगकारौ च लि पुस्तके.

मगणः　भगणः　सगणः　रगणः

।।।—। ऽ। —। ऽ। ऽ। ऽ

परत–नु संप्र(६)–षदन्ति कुक्कुट्य (६) ॥

## जलधरमाला म्भौ स्मौ समुद्रवसवः ॥ ८ । ४ ॥

यस्य पादे मगणभगणौ ( ऽऽऽ ऽ।। ) सगणभगणौ ( ।।ऽ, ऽऽऽ ) च भव तद्वृत्त जलधरमाला' नाम । चतुर्भिरष्टभिश्च यतिः । तत्रोदाहरणम्—

मगणः　भगणः　सगणः　मगणः

ऽऽ ऽ–ऽ　।।–। । ऽ–ऽ ऽ ऽ

धत्ते शो–भां(४) कुव–लयदा–मः श्यामा (८)

मगणः　भगणः　सगणः　मगणः

ऽ ऽ ऽ –ऽ　।।—। । ऽ—ऽ ऽ ऽ

शैलोत्स–ङ्गे(४) जल– धरमा– ला लीना (८) ।

मगणः　भगणः　सगणः　मगणः

ऽऽऽ—ऽ　।।—। । ऽ ऽ ऽऽ

विपुले–षा(४) कन–कलतासक्ता (८)

मगणः　भगणः　सगणः　मगणः

ऽ ऽ ऽ –ऽ　।।—। । ऽ –ऽ ऽ ऽ

क्रीडासु–स्ता(४) युव–तिरिवा–ङ्के पत्युः (८) ॥

## गौरी नौ रौ । ८ । ५ ॥

यस्य पादे नगणौ ( ।।।, ।।। ) रगणौ ( ऽ।ऽ, ऽ।ऽ ) च भवतस्तद्वृत्त गौरी' नामेति गाथा । पादान्ते यतिः । तत्रोदाहरणम्—

नगणः　नगणः　रगणः　रगणः　नगणः　नगणः　रगणः　रगणः

।।।—।।।—ऽ।ऽ—ऽ।ऽ　।।।—।।।—ऽ।ऽ—ऽ।ऽ

प्रणम–ति चर–णारवि–न्दद्वय त्रिभुव–ननमि–तस्य गौ–रीपतेः ।

नगणः　नगणः　रगणः　रगणः　नगणः　नगणः　रगणः　रगणः

।।।—।।।—ऽ।ऽ ऽ।ऽ　।।।—।।।—ऽ।ऽ—ऽ।ऽ

सकृद–पि मन– सैव यः सेवित प्रमित–रति य–घेप्स–यै गुणान् ॥

इयमेव गौरी दण्डकात्पूर्वमेकैकरेफवृद्ध्या नामान्तराणि लभते ।

## ललना भ्तौ नसाविन्द्रियर्षयः ॥ ८ । ६ ॥

१ नीलं' इत्यसाधितूचरणलिखिते पिङ्गलोदाहरणपुस्तके　२ 'एकैकरेफवृद्ध्या च' क. ख पुस्तके.

यस्य पादे भगणतगणौ ( ऽ॥, ऽऽ। ) नगणसगणौ ( ।।।, ।।ऽ ) च भवतस्तद्वृत्तं 'ललना' नाम गाथा। पञ्चभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

भगण तगणः नगण सगणः
ऽ । । –ऽ ऽ ।—। । । —। । ऽ
या कुच–गुर्वी(५) मृ–गशिशु–नयना (७)

भगण तगण नगण सगण
ऽ । । –ऽ ऽ — ।—। । । –। । ऽ
पीननि–तम्बा(५) म– दकरि–गमना (७)।

भगण तगण नगण सगण
ऽ । । –ऽ ऽ — ।–। । । —। । ऽ
किनर–कण्ठी(५) सु–रुचिर– दशना (७)

भगण तगण नगण सगण
ऽ ।। ऽ ऽ — ।—।।। । । ऽ
सा[1] तव सौख्यं(५) वि–तरतु ललना (७)॥

( अतिजगत्याम् )

## कनकप्रभा स्जौ स्जौ ग्॥ ८। ७॥

यस्य पादे सगणजगणौ ( ।।ऽ, ।ऽ। ) पुनः स[2]गणजगणौ ( ।।ऽ, ।ऽ। ) गकारश्च (ऽ) तद्वृत्तं 'कनकप्रभा' नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्—

सगण जगण सगण जगणः गु०
। । ऽ—। ऽ ।–। । ऽ —। ऽ । —ऽ
कनक–प्रभा पृ–थुनित–म्बशालि–नी

सगणः जगण सगणः जगणः गु०
। । ऽ—। ऽ । —। । ऽ–। ऽ । –ऽ
विपुल– स्तनी ह– रिणशा–वकेक्ष–णा।

सगण जगण सगण जगणः गु०
। । ऽ–। ऽ । —। । ऽ । ऽ । —ऽ
इयम–ङ्गना न– यनयो पथि स्थि–ता

सगणः जगणः सगण जगणः गु०
। । ऽ । ऽ । । । ऽ–। ऽ । – ऽ
कुरुते न कस्य मदना–तुर म–न ॥

---

१. 'वा तव सौख्यं' लि पुस्तके. २. 'तावेव' लि. पुस्तके.

## कुटिलगतिर्नौ तौ ग् स्वरर्तवः ॥ ८ । ८ ॥

यस्य पादे नगणौ ( III, III ) तगणौ ( SSI, SSI ) गकारश्च (S) भवति तद्वृत्तं 'कुटिलगति'र्नाम माया । सप्तमि षड्भिश्च यतिः ॥

नगणः　नगणः　तगणः　तगणः　गु

I I I　I I I　S S I　S S I　S

अधर– किसल–ये(७)कान्त–दन्तक्ष–ते (६)

नगणः　नगणः　तगण　तगणः　गु

I I I　I I I　S S I　S S I　S

हरिम–णिशिख–रां (७)मूल–सि भूयु–गम् (६)।

नगणः　नगणः　तगणः　तगणः　गु

I I I　I I I　S S I　S S I　S

भुवनि– कुसुमि– तं (७)मधि– पतौ स–दा (६)–

नगणः　नगणः　तगण　तगणः　गु

I I I　I I I　S S I　S S I　S

। मतिकु—टिलग–तेः(७)स्वान्म–हानुत्स–वः (६) ॥

( शक्वर्याम् )

## वरसुन्दरी भ्जौ स्नौ गौ ॥ ८ । ९ ॥

यस्य पादे भगणजगणसगणनगणा ( SII ISI, IIS, III ) गकारौ ( S, S ) च तदतत्यष्टिवृत्तं 'वरसुन्दरी' नाम माया । पादान्ते यतिः । तत्रोदाहरणम्—

भगणः　जगणः　सगणः　नगणः　गु　गु

S I I　I S I　I I S　I I I　S　S

स्वाबुधि–शिरोज्ज–कुसुग–न्धिबद्ध– पू–र्ण

भगणः　जगणः　सगणः　नगण　गु　गु

S I I　I S I　I I S　I I I　S　S

पीविम–यचम–छविनि– ऋधत–प–नम् ।

भगणः　जगणः　सगणः　नगणः　गु　गु

S I I　I S I　I I S　I I I　S　S

हंसक–क्कूजि–त–मनो– हरत–द्य–न्त

भगण　जगण　सगणः　नगणः　गु　गु

S I I　I S I　I I S　I I I　S　S

पश्य व–रसुन्द–रि सरो–वरमु–दा–रम् ॥

---

१ 'अ्भौ क सु' पुस्तके

## कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ॥ ८ । १० ॥

यस्य पादे मगणभगणनगणयगणा[1] ( SSS, SII, III, ISS ) गकारौ ( S, S ) च भवतस्तद्वृत्त 'कुटिला' नाम गाथा । चतुर्भि. षड्भिश्चतुर्भिश्च यतिः । तत्रोदाहरणम्—

मगणः भगण नगण यगणः गु० गु०
S S S –S I I—I I I—I S S—S–S
अध्वस्था–ना(४)जन–यति सु–ख(६)मुचे.–कू–ज(४)–

मगणः भगण नगणः यगण गु० गु०
S I I—S I I I I I—I S S—S–S
न्दात्यूहो–ऽयं(४)पथि निचुलि–नि(६)तोयो–पा–न्ते[2] (४) ।

मगण भगणः नगणः यगणः गु० गु०
S S S—S I I–I I I—I S S—S—S
कर्णाट–स्त्री(४)रति–कुहरि–त(६)तुल्य–च्छे– दैं(४)

मगणः भगण नगणः यगणः गु० गु०
S S S—S I I—I I I—I S S–S—S
नादैः क–ण्ठ(४)स्खल–नकुटि–ल(६)मन्दा–व– र्तैः (४) ॥

( अष्टौ )

## शैलशिखा भ्रौ न्नौ भ्गौ भूतरसेन्द्रियाः[3] ॥ ८ । ११ ॥

यस्य पादे भगणरगणौ ( SII, SIS ) नगणभगणौ ( III, SII ) भगणो ( SII ) गकार(S)श्च भवति तद्वृत्तं 'शैलशिखा' नाम गाथा ॥ पञ्चभिः षड्भिः पञ्चभिश्च यतिः । क्वचित् पादान्ते यतिं पठन्ति । तत्रोदाहरणम्—

भगणः रगणः नगण भगण भगण गु०
S I I—S I S—I I I—S I I—S I I–S
शैलशि–खानि(५)कु– ञ्जशयि–तस्य(६)द्व–रे·श्रव–णे(५)

भगणः रगणः नगणः भगणः भगण गु०
S I I–S I S–I I I—S I I—S I I–S
जीर्णतृ–ण क(५)रे–ण निद–[4]धाति(६)क–पिश्चप–लः (५) ।

भगण रगणः नगण भगणः भगण गु०
S I I—S I S –I I I–S I I—S I I–S
क्षुद्रव–धाप(५)वा–दपरि–हार(६)वि–नीतम–ते (५)–

---

१. 'यगणगकारौ च' इति लि. पुस्तके, क. मु पुस्तके च. २. 'नितुलनितम्बोपान्ते' लि. पुस्तके. ३. 'भूतरसेन्द्रियाणि' लि. पुस्तके. २. 'निदधीत' इति. क. पुस्तके., लि. पुस्तके च.

भगणः रगणः भगणः भगणः भगणः गु

S I I I—S I I S—I I I—S I I—S I I —S

स्वस्य न तात(५)वै–व लघु–ता वि(६)प–मूपमि–द (५) ॥

## वरयुवती भ्रौ य्नौ न्गौ ॥ ८ । १२ ॥

यस्य पादे भगणरगणौ ( SII SIS ) यगणनगणौ ( ISS, III ) नगणो ( III ) गकारश्च (S) भवति तद्वृत्तं 'वरयुवती' नाम गाथा । पादान्ते यतिः । तत्रोदाहरणम्—

कुञ्जर–कुम्भपी–ठ–पीनो–न्नतकु–चयुग–ला

पार्वण–शर्वरी–श्वरवी–म्बसु–खकम–ला ।

पीननि–तम्बबि–म्बसंवा–हनधि–थिलग–ति—

मुंञ्च न–रामिरा–म भूया–स्तव व–रयुव–तिः ॥

( अस्यर्थे )

## अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः ॥ ८ । १३ ॥

यस्य पादे सगणौ ( IIS IIS ) जगणभगणौ ( ISI, SII ) जगणो ( ISI ) गकारौ ( S,S ) च भवेतत्स्वृत्तं अतिशायिनी' नाम गाथा । दशमि सप्तमिश्च यतिः । तत्रोदाहरणम्—

सगणः सगणः जगणः भगणः जगण गु गु

इति मौ–तपुर–प्रमत्त–रा(१)न्सर–सि मन्म–ने–न (७)

सगणः सगणः जगणः भगणः जगणः गु गु

भियमा–सवतो–ऽतिशायि–नी(१०)मप–मका–मा–स (७) ।

---

१ 'जगणो' इति लेखकप्रमादवशतो नास्ति लिखितपुस्तके २ 'भमत' इति लि पुस्तके नास्ति ३ उदाहरणमेतत् माघकाव्यात् । उद्धृत हलायुधेन

सगण सगण जगण भगणः जगणः गु० गु०

। । ऽ – । । ऽ –। ऽ। —ऽ। ।—। ऽ ।–ऽ—ऽ

अवलो–क्य तदे–व याद–वा(१०)नप– रवारि–रा–शे· (७)।

सगण सगण जगणः भगण जगणः गु० गु०

। । ऽ –। । ऽ —। ऽ । —ऽ । ।—। ऽ।—ऽ—ऽ

शिशिरे–तररो– च्चिषाप्य–पा(१०)तति–षु मञ्जु–मी– षे(७) ॥

## अवितथं न्जौ भ्जौ ज्लौ ग् ॥ ८ । १४ ॥

यस्य पादे नगणजगणौ ( ।।।, ।ऽ। ) भगणजगणौ ( ऽ।।, ।ऽ। ) जगणलकारौ ( ।ऽ।, । ) गकारश्च ( ऽ ) भवति तद्वृत्तम् 'अवितथम्' नाम गाथा भवति । यतिः पादान्ते । तत्रोदाहरणम्—

नगण जगण भगण जगण जगण ल० गु०

। । ।—। ऽ ।–ऽ । ।—। ऽ ।—। ऽ ।–। –ऽ·

श्रुतिप–रिपूर्त–वक्त्रम–तिसुन्द– रवाग्वि–भ–वं[1]

नगण जगण भगण· जगणः जगण· ल० गु०

। । । – । ऽ ।—ऽ । ।—। ऽ ।—। ऽ । –।—ऽ·

तमखि–लजैमि– नीयम–तसाग– रपार–ग–तम् ।

नगणः जगण भगण जगणः जगण· ल० गु०

। । ।–। ऽ ।—ऽ । ।–। ऽ ।—। ऽ ।–। –ऽ·

अवित–थवृत्त –विप्रज–नपूजि – तपाद–यु–गं

नगण· जगण· भगण जगण· जगण ल० गु०

। । ।–। ऽ । –ऽ । ।–। ऽ ।—। ऽ ।–। – ऽ·

पितर–मह न -मामि ब–हुरूप –मुदार–म–तिम् ॥

## वस्विन्द्रियसमुद्राश्चेत्कोकिलकम् ॥ ८ । १५ ॥

यस्य पादे पूर्वोक्ता गणा भवन्ति, अष्टाभि· पञ्चभिश्चतुर्भिश्च यतिर्भवति तद्वृत्तं 'कोकिलकम्'[2] इति गाथा । तत्रोदाहरणम्—

नगणः जगण भगण जगणः जगणः ल० गु०

। । ।–। ऽ ।–ऽ । ।–। ऽ ।—। ऽ ।—।–ऽ

तवस–हकार–पुष्प(८)म–धुनिष्क–ल(५)कण्ठ– त–या (४)

---

१. 'श्रुतिपरिपूर्णवक्त्र' इति क. मु. पुस्तके लि. पुस्तकेच. २. 'कोकिलेति गाथा' इति लि पुस्तके.

नगणः जगणः भगणः जगणः जगणः ल गु

मधुर–वैरस्व–रेण(८)प–रिकूज–ति(५)कोकि–ल–कः (४) ।

नगणः जगणः भगणः जगणः जगणः ल गु

प्रथम–ककारै–विग्र(९)च–चनैर्ध–न(५)लुप–म–ते (४)–

नगणः जगणः भगणः जगणः जगणः ल गु

स्वय म–मनस्य म(८)मि–व संप्र–ति(५)कर्तु–म–ना (४) ॥

( धृतौ )

## विबुधप्रिया रसौ जौ भरौ वसुदिश ॥ ८ । १६ ॥

यस्य पादे रगणसगणौ ( ऽ।ऽ, ।।ऽ ) जगणौ ( ।ऽ।, ।ऽ। ) भगणरगणौ (ऽ।।, ऽ।ऽ) र भवतस्तद्वृत्त 'विबुधप्रिया' नाम गाथा भवति । अष्टभिर्दशभिश्च यतिः । तत्रोदाहरणम्—

रगणः सगणः जगणः जगणः भगणः रगणः

कुन्दकु–ड्मलको–मल(८)यु–ति दन्त–पङ्क्तिवि–राजिता (१०)

रगणः सगणः जगणः जगणः भगणः रगणः

हसग–मनवा–दिनी(८)य–निता म–येहिबु–धप्रिया(१०) ।

रगणः सगणः जगणः जगणः भगणः रगणः

पीनतु–ङ्गपयो–धर(८)इ–ममार–मन्थर–गामिनी (१०)

रगणः सगणः जगणः जगणः भगणः रगणः

नेत्रक–न्तिविनि–र्जित(८)भ–मपाय–संचित–कैरमा (१०) ।

## नाराचक नौ रौ रौ ॥ ८ । १७ ॥

---

१ 'मधुरसरेण' (!) छि पुस्तके २ 'विबुधवचनैः' छि पुस्तके ३ 'लुब्धमते तव' क मु पुस्तके, छि पुस्तके च ४ 'विभ्रमन्ति' छि पुस्तके

यस्य पादे नगणौ ( ।।।, ।।। ) रगणाश्चत्वारो ( ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ ) भवन्ति तद्वृत्तं 'नाराचक' नाम गाथा । दशभिरष्टाभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः रगण रगणः रगण रगण

।।।—।।।—ऽ।ऽ ऽ ।ऽ—ऽ ।ऽ—ऽ ।ऽ

रघुप–तिरपि जातवे–दो(१०)विशु– द्धा प्रगृ–ह्य प्रिया (८)

नगणः नगणः रगणः रगण रगणः रगणः

।।।—।।।—ऽ।ऽ ऽ ।ऽ—ऽ ।ऽ—ऽ।ऽ

प्रियसु–हृदि वि–भीषणे स(१०)क्रम–य्य श्रिय–वैरिणः (८) ।

नगणः नगण रगण रगणः रगण रगणः

।।।—।।।—ऽ।ऽ—ऽ ।ऽ—ऽ ।ऽ—ऽ।ऽ

रविसु–तसहि–तेन ते–ना(१०)नुया–तः ससौ–मित्रिणा (८)

नगण नगण रगणः रगण रगण रगणः

।।।—।।।—ऽ।ऽ—ऽ ।ऽ—ऽ ।ऽ—ऽ ।ऽ

भुजवि–जितवि–मानर–त्ना(१०)धिरू–ढ. प्रत–स्थे पुरीम् (८) ॥

( अतिधृतौ )

## विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वराः ॥ ८ । १८ ॥

यस्य पादे यगणमगणौ ( ।ऽऽ, ऽऽऽ ) नगणसगणौ[2] ( ।।।, ।।ऽ ) रगणौ (ऽ।ऽ, ऽ।ऽ) गकारश्च (ऽ) भवति तद्वृत्तं 'विस्मिता' नाम गाथा ॥ षड्भि, षड्भिः, सप्तभिश्च यतिः । तत्रोदाहरणम्—

यगणः मगण नगणः सगणः रगण रगणः गु०

।ऽ ऽ—ऽ ऽऽ— ।।।—।।ऽ —ऽ।ऽ ऽ।ऽ—ऽ

श्रिया जु–ष्टं दिव्यै (६)सपट–हरवै(६)–रन्वितं पुष्पव–र्षै–(७)

यगण मगण नगण सगण रगण रगण गु०

।ऽऽ—ऽ ऽऽ ।।।—।।ऽ ऽ।ऽ—ऽ ।ऽ—ऽ

वपुर्ष्टे–श्चैद्यस्य(६)क्षणमृ–षिगणै (६)स्तूयमा–नं निरी–य(७) ।

यगण मगणः नगण सगणः रगण रगण गु०

।ऽऽ—ऽऽऽ ।।।—।।ऽ —ऽ।ऽ—ऽ।ऽ—ऽ

प्रकाशे–नाकाशे(६)दिनक–रकरा(६)–न्विक्षिप–द्विस्मिता–क्षै–(७)

१. पद्यमेतद् रघुवंशे त्रयोदशे सर्गे. २. 'न सगणौ' क. मु पुस्तके. ३. माघकाव्यस्थं पद्यमेतत्. ४. 'वपुषः' लि पुस्तके.

द्वौ ग्लौ द्विकौ स्थापयेत् । द्वे आवृत्ती प्रमाणमनयोरिति द्विकौ । 'संख्याया अतिशदन्तायाः कन्' इति कन्प्रत्ययः । ततश्च गकारं ततोऽधस्ताल्लकारं लिखित्वा विस्पष्टार्थमधस्तिर्यग्रेखा दद्यात् । अधस्ताच्च पूर्ववद् गकारलकारौ स्थापयेत् ॥

अत्र किं कर्तव्यमित्याह—

**मिश्रौ च ॥ ८ । २१ ॥**

अनेन द्वितीयाक्षरप्रस्तारं दर्शयति । चकारः पूर्वप्रस्तारसमुच्चयार्थः । द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयस्थानेषु मिश्रौ ग्लौ विन्यसेत् । गकारो गकारेण[1] संश्लिष्टो मिश्र उच्यते, लकारश्च लकारेण । मिश्राविति गकारलकाराभ्यां प्रत्येकमभिसंबध्यते । द्वन्द्वात्परो यः[2] श्रूयत इति न्यायात् । ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत् । द्वितीयाया लकाराविति । ततो मध्ये लेखामपनयेत् । एवं चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति । तद्यथा—गौ ल्गौ ग्लौ लाविति ॥

इदानीं द्व्यक्षरप्रस्तारपूर्वकमेकैकाक्षरवृद्ध्या त्र्यक्षरादिप्रस्तारं दर्शयितुमाह—

**पृथग्ला मिश्राः ॥ ८ । २२ ॥**

द्व्यक्षरप्रस्तारस्य[3] पूर्वन्यायेन द्विकं लेखाविभक्तं[4] स्थापयित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः । द्वितीयावृत्तौ[5] लकारा मिश्रास्ततो मध्ये[6] लेखामपनयेत् । एवं त्रिकः प्रस्तारः सिध्यति । पृथगिति विजातीयासंसर्गमाह[7] । तेन प्रथमायामावृत्तौ न लकारप्रवेशः[8] । द्वितीयायां न गकारस्य । एवं त्रिकप्रस्तारं द्विः स्थापयित्वा पृथग् ग्ला मिश्रा दातव्या । द्वितीयाया न गकारस्य । एवं तत्पूर्वकः पञ्चाक्षरः प्रस्तारस्तथैव[9] तत्पूर्वकः षडक्षरो गायत्रीसमवृत्तः प्रस्तारः । एवमुष्णिगादीनामप्येकैकाक्षरवृद्ध्या[10] अयमेव न्यासः[11] । तत्रेदं सूत्रं त्र्यक्षरात् प्रभृति पुनः पुनरावर्तनीयं यावदभिमतः प्रस्तारः ॥

**वसवस्त्रिकाः ॥ ८ । २३ ॥**

एवं पूर्वोक्ते त्र्यक्षरप्रस्तारे[12] अष्टौ त्रिका जायन्ते । ते च[13] मकारादयः शास्त्रादौ कथिता एव । प्रदर्शनार्थं चैतत् । तेन षोडश चतुष्का द्वात्रिंशत्पञ्चका भवन्ति । एवं[14]

---

१. 'गकारो गकारेण मिश्रः संश्लिष्टः । उच्यते लकारश्च लकारेण' लि. पुस्तके. २. 'द्वन्द्वान्ते इति श्रूयते इति न्यायात्' लि. पुस्तके. ३. 'द्व्यक्षरप्रस्तारं' लि. पुस्तके. ४. 'लेखविभक्तं' लि. पुस्तके. ५ 'द्वितीयाया वृत्तौ' लि पुस्तके स्थापयेत क. मु. पुस्तके. ६. 'ततो मध्याद्रेखामपनयेत्' लि. पुस्तके ७. 'विजातीयससर्गमाह' क. मु. पुस्तके ८. 'लकारस्याप्रवेश । द्वितीयाया गकारस्या एवं त्रिकं द्विः स्थापयित्वा' लि. पुस्तके ९. क. मु पुस्तके 'एवं' इति नास्ति. १०. 'एकाक्षरवृद्ध्या' लि पुस्तके. ११. 'न्यायः' क. मु. पुस्तके. १२. 'त्र्यक्षरे' लि. पुस्तके १३. 'गकारादय. शास्त्रे' इति लि. पुस्तके. १४. 'एवं च' लि. पुस्तके.

च्चतुःपङ्क्तिर्गायत्रीसमवृत्तानि सर्वगुरुलघ्वाद्यन्तानि भवन्ति । द्विगुणोत्तरमुष्णिगादीनामेकैकाक्षराधिक्यात् । विसंख्यार्थमिदं सूत्रम् । प्रस्तारादेव संख्यापरिच्छित्तेः ॥

नष्टवृत्तपरिज्ञानार्थमाह—

## लर्द्धे ॥ ८ । २४ ॥

यदेवं विजिज्ञासेत गायत्र्यां समवृत्तं षष्ठं कीदृशमिति तदा तमेव षट्संख्याविशेषमर्धयेत । तस्मिन्नर्धीकृते लघुरेको लभ्यते तं भूमौ विन्यस्येत् । इदानीमवशिष्टात् त्रिरिति संख्याविषयत्वादर्धयितुं न शक्यते ॥

तत्र किं प्रतिपत्तव्यमित्याह—

## सैके ग् ॥ ८ । २५ ॥

अर्धे इत्यनुवर्तते विषमसंख्यायामेकमधिकं निक्षिप्य ततोऽर्धयेत । तत्रैको गकारो लभ्यते । तं पूर्वलब्धाल्लकारात् परं स्थापयेत् । ततो द्विसंख्यावशिष्यते । पुनस्तामर्धयेत । ततश्चैकल्लकारं दद्यात् ततश्चैकसंख्यावशिष्यते । तत्र तावत् सैके गिति लक्षणमावर्तनीयम् । यावद्वृत्ताक्षराणि पदं पूर्यन्ते । एवं संख्यान्तरेऽपि योज्यम् ॥

उद्दिष्टवृत्तस्य संख्यापरिज्ञानार्थमाह—

## प्रतिलोमगणं द्विर्लाद्यम् ॥ ८ । २६ ॥

यस्य वृत्तस्य संख्यां जिज्ञासेत तद्भूमौ प्रस्तारयेत । ततस्तस्यान्ते यो लकारः सजातीयापेक्षया तमादौ कृत्वा प्रातिलोम्येन द्विरावर्तयेत । तत्र निराश्रयाया आवृत्तेरसंभवात् प्रथमातिक्रमे कारणाभावादेकसंख्या लभ्यते । ततश्चैकसंख्यामन्त्यलकारस्याधस्तात् स्थापयित्वा द्विगुणयेत् । ततस्तस्मादपनीय तत्पूर्वस्य वर्णस्याधस्तान्निधाय पुनर्द्विगुणयेत् । पुनस्तदपि पूर्वस्यैव यावन्ति वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते तत्र या संख्या निष्पद्यन्ते तावतिथं तद्वृत्तमिति ॥

तत्र विशेषमाह—

## ततोऽप्येकं जह्यात् ॥ ८ । २७ ॥

पूर्वोक्ते कर्मणि क्रियमाणे यदि सा संख्या गकारस्थानमापद्यते तदा तां द्विगुणयित्वा ततः संख्यासमुदायादेकं त्यजेत् । ततः पूर्वोक्तं कर्म कुर्यात् । ततः परिपूर्णत्वात्तद्वृत्तसंख्या सिध्यति ॥

प्रस्ताराद्विना वृत्तसंख्यापरिज्ञानार्थमाह—

## द्विरर्द्धे ॥ ८ । २८ ॥

अपनीत इत्यध्याहारः । यदा जिज्ञासेत षडक्षरे छन्दसि कति वृत्तानि भवन्ति तदा

तदेतच्छन्दोवृत्तसंख्याजातं द्विगुणितं पूर्णमेव स्थापयितव्यम् । न न्यूनम् । परे छन्दसि त्रिशाद्धिते तत्संख्याजातं द्विगुणितं परस्य छन्दसो वृत्तानां संख्या भवति । यथा—चतुःषष्टिगायत्रीसमवृत्तानां संख्या द्विगुणीकृता सती परस्योष्णिहः समवृत्तसंख्याष्टाविंशं शतं भवति ॥

## परे पूर्णमिति ॥ ८ । ३४ ॥

अतोऽनेकद्वित्रिलघुक्रियासिद्ध्यर्थं यावदभिमतं प्रथमप्रस्तारयं मेरुप्रस्तारं दर्शयति । उपरिष्टादेकं चतुरस्रकोष्ठं लिखित्वा तस्याधस्तादुभयतोऽर्धनिष्क्रान्तं कोष्ठकद्वयं लिखेत्[1] । तस्याप्यधस्तात्त्रयं तस्याप्यधस्ताच्चतुष्टयं यावदभिमतं[2] स्थानमिति मेरुप्रस्तार[3] ॥ तस्य प्रथमे कोष्ठे एकसंख्यां व्यवस्थाप्य लक्षणमिदं प्रवर्तयेत् । तत्र परे कोष्ठे यद्वृत्तसंख्याजातं तत् पूर्वकोष्ठयोः पूर्णं निवेशयेत्[4] । तत्रोभयोः कोष्ठकयोरेकैकमङ्कं दद्यात् मध्ये कोष्ठे तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं निवेशयेदिति पूर्णशब्दार्थः । चतुर्थ्यां पङ्क्तावपि पर्यन्तकोष्ठयोरेकैकमेव स्थापयेत्[5] । मध्यमकोष्ठयोस्तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं त्रिसंख्यारूपं स्थापयेत्[6] । उत्तरत्राप्ययमेव न्यासः ॥

तत्र द्विकोष्ठायां पङ्क्तौ एकाक्षरस्य विन्यासः । तत्रैकगुर्वेकलघुवृत्तं भवति । तृतीयायां पङ्क्तौ द्व्यक्षरस्य प्रस्तारः । तत्रैकं सर्वगुरु, द्वे एकलघुनी, एकं सर्वलघ्विति कोष्ठक्रमेण वृत्तानि भवन्ति । चतुर्थ्यां पङ्क्तौ त्र्यक्षरस्य प्रस्तारः । तत्रैकं सर्वगुरु त्रीण्येकलघूनि त्रीणि द्विलघूनि एकं सर्वलघु । तथा पञ्चमादिपङ्क्तावपि सर्वगुर्वादिसर्वलघ्वन्तमेकद्व्यादिलघु द्रष्टव्यमिति । षष्ठप्रत्ययोऽप्यध्वपरिच्छित्तिरित्येके । सोऽल्पत्वात् पुरुषेच्छाविधायित्वेनानियतत्वाच्च नोक्तः । एष प्रत्ययसमासः समाप्तः ॥

पिङ्गलाचार्यरचिते छन्दःशास्त्रे हलायुधः ।
मृतसंजीविनीं नाम वृत्तिं निर्मितवानिमाम् ॥

इति श्रीमद्धलायुधकृतायां छन्दोवृत्तौ मृतसंजीविनीनाम्न्यामष्टमोऽध्यायः ॥

समाप्तश्चायं ग्रन्थः ॥

---

१ 'लिखेत' क मु पुस्तके २ 'यावदाभिमतं' क मु पुस्तके ३ प्रथममेरुप्रस्तार' क मु पुस्तके ४ 'निवेशयेत' क मु पुस्तके ५ ततस्तृतीयायां पङ्क्तौ पर्यन्तकोष्ठयो परकोष्ठगतमेकैकमङ्कं दद्यात्. ६ 'स्थापयेत' क मु पुस्तके

# छन्दःसूत्राणां वर्णक्रमेणानुक्रमणी ।

अध्याये. सूत्रम्. पृष्ठे.

# पिङ्गलसूत्रोदाहरणानामकारादिक्रमेणानुक्रमणी ।

(र)



(ल)



(व)



(श)